# आदित्य-हृदयम्




श्रीदेवीप्रसाद व्याकरणतीर्थेन सम्पादितम्।

Presented to the Agamānusandhan Samiti
with the editor's best Compliments.
21-2-37

# आदित्य-हृदयम् ।



प्रभासपट्टनस्थ-शारदामठाधीश-जगद्गुरु-श्रीशङ्कराचार्य्यचर-
ब्रह्मीभूत-परमपूज्यपाद-स्वामि त्रिविक्रमतीर्थ-
महोदयैः संशोधितं पाठमवलम्ब्य—



तदीयचरणकमलभृङ्गायमानेन
सेवकेन
**श्रीदेवीप्रसाद व्याकरणतीर्थेन**
**उपोद्घात-पाठभेद-आदित्यदीपनीटीकादिभिः**
**संयुज्य सम्पादितम् ।**



कलिकाता नगरीतः
८।१ रायबागानष्ट्रीटस्थितायाः
**कालिदास चतुष्पाठीतः**
प्रकाशितम् ।
१८५८ शकाब्दः ।

मूल्यमाणकदशकम् ।



श्रीशारदामठाधीश जगद्गुरु श्री १००८ शङ्कराचार्य्यचर ब्रह्मीभूत

**श्रीमत् स्वामि त्रिविक्रमतीर्थः।**

I. A. S. CALCUTTA.

ॐ

वेद-वेदान्त-तन्त्र-यन्त्रादि-निखिल-शास्त्रापार-पारावार-
पारीणानां श्रीशारदापीठाधीश श्रीमद्भगव-
च्छङ्कराचार्यचरणां साधनोचित-धाम-
प्रयातानां श्रीत्रिविक्रमतीर्थस्वामि-
पादानामकाल-तिरोधान-
मुपलक्ष्य—

# विलापलहरी ।



अयि शङ्कर ! शारदामठे
विबुधानां धुरि संप्रतिष्ठित ! ।
प्रविहाय पदाश्रितान् जनान्
गमनं तेऽसमये न युज्यते ॥

भवतः परचिद्घनं वपु-
र्जननान्तरपुण्यलेशतः ।
उदगात् क्षणमात्रमेव नः
प्रतिहत्येव दृशौ तडिद् यथा ॥

सहसा पतितोऽशनिर्मयि
किमु कायस्तव नैव दृश्यते ?
लयमेव चिराय किं गतं
ललितं ज्ञानमयं भवद्वचः ? ॥

अतिदुर्भरशोकशल्यितो
ननु जीवामि कथं निराश्रयः ।
यदि मे दयया ददासि न
प्रतिवाक्यं पुरतः पुनः स्थितः ॥

शरणं क्व नु यामि साम्प्रतं
सदय ! द्यां प्रगते चिरं त्वयि ?
सहसास्तमिते प्रभाकरे
वद पद्मस्य भवेद्धि का दशा ? ॥

अधुना विदितं दयाघन !
मयि दीने तव वर्त्तते कृपा ।
विगतेऽपि च पाञ्चभौतिके
ननु नित्यं तव चिन्मयं वपुः ॥

विदुषां वर ! ते त्वहेतुकी
यदि दीने करुणाकणा ! पुरा
तृषितं खलु चातकं यथा
घनवर्षैः सहसा ह्यजीवयत् ॥

कृपया मयि यद्गुरो ! पुरा
ह्युपदिष्टं विदुषां गुणाग्रणीः ।
तव सौम्य ! शुभाशिषा समं
दवयत्याधिशतं ममाधुना ॥

आविर्भूय पुरा परापरगुरो ! दुर्भाग्यतो मादृशान्
स्वल्पैरेव दिनै विहाय परमं दिव्यपदं प्रस्थितः।
दैवेनात्र तु दर्शिता स्वविभुता किन्त्वस्ति यन्मानसे
दिव्यं ज्ञानघनं वपुर्भगवतस्तत् कोऽपहर्त्तुं क्षमः ? ॥ ९ ॥
त्रिविक्रमपदं प्राप्य यत्र विश्राम्यतेऽधुना ।
त्रिविक्रमगुरोः पादपद्मे नतिरियं मम ॥ १० ॥

तदीयचरणकमलभृङ्गाय-मानस्य शोक-शल्यितचेतसो
दासजनस्य
श्रीदेवीप्रसाद व्याकरणतीर्थस्य ।

---

ॐ

तत् सत्

# उत्सर्गपत्रम्

पुण्यस्मृत्यै शङ्कराचार्य्यवर्य्य-
स्वामि-श्रीत्रैविक्रमानां गुरूणाम् ।
आदित्यस्य स्तोत्रमेतत् पवित्रं
दासस्यायं भक्तिपुष्पाञ्जलिर्मे ॥ १ ॥

वेद-तन्त्र-बहुशास्त्र-सागर-
पारगस्य चरणारविन्दयोः ।
श्रीत्रिविक्रमगुरोर्महात्मनो
दासदासरचिते नतिस्तुती ॥ २ ॥

स्वामिन् त्रिविक्रमगुरो ! दयया करोतु
श्लोकाञ्जलेरकृतिनो ग्रहणप्रसादम् ।
आदित्य-देव-हृदयं भवतैव पूर्व्वं
संशोधितं तदिदमङ्ग! न वै मदीयम् ॥ ३ ॥

उत्स्रष्टुं वा प्रभवति कथं मादृशो यन्न मेऽस्ति
स्मृत्यै श्रीमत्-परमभगवत्-स्वामिनस्तन्निजस्वम् ।
रक्षायोगान्मयि यदि भवेत् सेवके स्नेहदृष्टि-
र्याचे युस्मत्पदकमलयोर्निश्चला भक्तिरस्तु ॥ ४ ॥



# सूचोपत्रम्







॥ श्रीश्रीशारदाम्बाचन्द्रमौलीश्वरौ विजयेतेतराम् ॥

# उपोद्घातः ।



अयि भोः सारस्वतसागरपारंगताः पण्डिताः! सदयमवधानमत्र विरचयन्तु भवन्तः। ननु विदितमेव श्रीमद्भिर्यदादित्यहृदयं नाम्ना ध्वान्तविध्वंसिनः सकलामंगलखण्डनस्य चण्डतेजसः सवितुः स्तवराजः कश्चिद् विद्यते। दारिद्र्यदावदवथुदूरीकारकतया वा शश्वदगणितरोगसंहारकतया वा धनधान्यादिसमृद्धिवर्द्धकतया वा मोक्षपदप्रापकतया वा स्तवस्यास्य भारतवर्षस्य सर्व्वेष्वेव देशेषु विदुषां परिषदि समधिकः समादरः पुरासीत्। पराधीनतया वा भारतस्य सम्यगनुशीलनाभावाद्वा सुरगिरः, प्रबलतया वा वैदेशिकम्लेच्छभावस्यैतादृशस्यापि स्तवस्य सुविशुद्धः पाठः खल्वधुना दुर्लभ एव संजातः। अस्माभिरपि तत्स्तवपाठिभिर्भ्रमांधकारप्रतिच्छन्नदृग्भिर्महता दुःखेन शुकवाक्यवदधीयते स्म।

एतस्मिन्नन्तरे जननान्तरकृतसुकृतमिव मूर्त्तं, नरशरीर समाश्रितमिव विद्यादैवतं, किमपि ज्ञानभासुरं महः समपहृत्यैव चक्षूंषि विस्मयविमूढमनसामस्माकं पुरः पुरा समुदैत्। ते हि साक्षादवतारा इव वेदाद्यनवद्यविद्यानां, सशरीराविर्भावा इव यमनियमा

स्नप्राणायामादिकतन्त्रविधीनां प्रभासपट्टनस्थशारदापीठाधीश-श्रीमच्छंकराचार्य्यभगवत्पादचराः श्रीत्रिविक्रमतीर्थस्वामिनो दयाघना अज्ञानांधतमसमस्माकं निवर्त्तयामासुः। महामोहान्ध-मलीमसधिषणेष्वस्मासु प्रकृत्यैव सदया महोदयास्तेत्वस्माकं कृते आदित्यहृदयस्य किमपि पुस्तकं करुणाकटाक्षवीक्षणवितरण-प्रसादेन परिशुद्धं विदधिरे। एवं चोक्तवन्तो यदवसरश्चेत् शुद्ध-पाठमुद्रापणप्रसादेनास्मान् तदीयपादपंकजभृङ्गायमानान् दासज-नान् कृतार्थयिष्यन्तीति। दुर्भाग्यतया मादृशानां पापपंकावृतानां ते हि महाभागा लीलादुर्ललितेन विधिना विगतस्याश्विनस्य प्रथमदिवसे परमं विष्णो पदमलमय एव प्रापिताः। एतेषां भग-वत्पादानामस्मास्वतिसदयानां वियोगेन शोकातिरेकशंकुदीर्य्य-मानहृदयमर्मस्थलाः सांप्रतमशरणा नितरामाकुलाश्च वयं सञ्जाताः। तथापि तेषां पावनी स्मृतिरुद्बोधयति पुनः कर्मण इति। तथाहि—

तीव्रं तीव्रं दहति हृदयं शोकदावानलोऽयं
भग्नं चित्तं दृढ़यति पुनः स्वामिनो ज्ञानमूर्त्तिः।
सेयं वाणी वितरति चिरं शान्तिमानन्दसान्द्रां
पुण्यस्मृत्यै पुनरपि गुरोः कर्मधर्मान्तरात्मा॥

पाठभेदारण्यगहनं मन्त्रयन्त्रादिसूक्ष्मतत्वकदर्थितगीष्पतिधि-षणं श्रीमदादित्याराधनासाधारणविधानदुर्ज्ञेयमादित्यहृदयं परि-ष्कर्त्तुमस्माकं ज्ञानविहीनानां शास्त्राध्ययनपराङ्मुखाणामय-मुद्यमः चन्द्राहरणसंकल्पपरायणस्योत्क्षिप्तकरद्वितयस्य वाम-नस्येव हास्याय भवितेति नूनं जानीमहे। किन्तु पूज्यतमानां

स्वर्गतानां ज्ञानगुरूणां गुरूणां श्रीमद्भगवत्पादानां पवित्रां स्मृतिमेव शाश्वतयितुमक्षमस्यापि सेवकजनस्य युक्तिरहितापि भक्तिपरवशस्येयं चेष्टेति बद्धकराञ्जलिः सुजनानां क्षमामेव याचे। अपरंच किमपि विदुषां सविधे निवेद्यमस्ति मादृशस्यासाध्यसाधनदुराशाविडम्बितस्य—

वज्रं वज्रसमं प्रकामकठिनं रत्नप्रधानं धनं
विद्धं चेत् सकृदत्र यंत्रनिपुणैः सूत्रस्य सिध्येद्गतिः।
आदित्यस्य तथैव गूढहृदयस्तोत्रस्य शुद्धौ गुरोः
श्रीश्रीस्वामिमहोदयस्य सरणिर्नूनं सहायो मम॥

## ( १ ) अथ आदित्यहृदयस्य परिचयः।

किमेतदादित्यहृदयं नामेति समासतः स्तवराजस्यास्य परिचयो यथामति प्रदीयते। आदित्य इत्यदितितनयः सूर्य्यदेवता अग्न्यभिमानिनी। तथाच ऋक्संहितायामाम्नायते—( २।३।२७ ) 'आदित्यासः शुचयो धारपूता अवृजिनो अनवद्या अरिष्टाः।' 'धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः॥'

आरण्यके द्वादशादित्या इति पठ्यन्ते। ते तु 'सविता वरुणः सूर्य्यः पूषा विश्वानरो भगः। यमो वृषाकपी केशी समुद्रोऽप्यज एकपात्॥ विष्णुश्च द्वादशादित्या' इति। आध्यात्मिकास्तु ते द्वादशमासाः संवत्सरस्येति। आधिदैविकाः पुनः—'धातार्य्यमा भगः पूषा वरुणोंऽशो मित्रः पर्जन्यस्त्वष्टा सविता विवस्वान् विष्णुश्चेति। पौराणिका खल्वेत एव—'इन्द्रो धाता भगः पूषा

मित्रश्च वरुणोऽर्य्यमा। अंशुर्विवस्वान् त्वष्टा च सविता विष्णुरेव च ॥ ते चामी तु पुराणोक्ता देवा नाक्षत्रिकाः स्मृताः।' तेषामुत्पत्तेरुपाख्यानं तैत्तिरीय-संहितायामाम्नायते (६।५।६) 'अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या उच्छेषणमददुस्तत् प्राश्नत् सा रेतोऽधत्त, तस्मै चत्वार आदित्या अजायन्ते'-त्यादि।

आदित्योऽयं देवः सकलदैवतकुलललामभूत इति बृहद्देवतायामपि समाख्यायते—'भवद्भूतं भविष्यच्च जङ्गमं स्थावरञ्च यत्। अस्यैके सूर्य्यमेवैकं प्रभवं प्रलयं विदुः॥' एतेन 'सूर्य्य आत्मा जगतस्तस्थुषश्च' इति यदुक्तं तदपि साधु संगच्छते। आदित्यस्य काप्यपरा परममधुरा व्युत्पत्तिर्विद्यते। सा खलु आदिरयं जगत इत्यादित्य आदौ भव आदिदेव इति। तथा हि वराहपुराणे—'योऽसावात्मा ज्ञानशक्तिरेक एव सनातनः। तत् सूर्य्यमिति भास्वांस्तु अन्योऽन्येन महात्मनः॥ लीनीभूतानि तेजांसि भासयन्ति जगत्त्रयम्। अस्मिन् सर्वे सुराः सिद्धा गणाः सर्वे महर्षयः॥ स्वयम्भूता इति विभोस्तस्मात् सूर्य्यस्तु सोऽभवत्। पृथक्त्वेन रविः सोऽथ कीर्त्यते वेदवादिभिः॥ भासयन् सर्वलोकांस्तु यतोऽसावुदितो दिवि। अतोऽसौ भास्करः प्रोक्तः प्रकर्षाच्च प्रभाकरः॥ दिवा दिवस इत्युक्तस्त्वत्कारित्वाद्दिवाकरः। 'सर्वस्य जगतस्त्वादिरादित्यस्तेन कथ्यते।' आदित्य हृदये च 'अनादिरादिरादित्यस्तेजोराशिर्महातपाः।' 'अनादिरादिरूपस्त्वमादित्यो दिक्पतिर्यम' इत्युक्तम्॥

हृदयमिति तु हरति जीवजातानि संकल्पविकल्पविधान-प्रदानेनेति हृधातोः कयन् प्रत्ययेन निष्पन्नोऽयं शब्दः। अर्थश्चापि तेनैतस्य मनसा समान एव। 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन' इत्यमरः। एवञ्च शरीरतत्वविद्भिर्वक्षःस्थलमपि हृदयशब्देनाभिधीयते। तथाच त्रिकाण्डशेषे—'उरस्यपि च बुक्कायां हृदयं मानसेऽपि च।' अत्र विद्यावधीरितवाचस्पति-बुद्धिभिः श्रीमद्भिः किमपि विचार्य्यं विद्यते। प्रथमं तावद्धृदयं मन इत्युक्त्वा कथं वक्षःस्थलमपि हृदयमिति कथ्यते ? अत्रोच्यते युक्तमेवोक्तं यत् संकल्पविकल्पात्मकस्य हृदयमित्यपरनाम्नो योऽयं वक्षःस्थलरूप आधारः सोऽपि हृदयमिति। मनस आधारभूतं वक्षःस्थलमेव नित्यं प्रत्यक्षीक्रियते नतु मन इति दर्शनयोग्यं वक्षःस्थलमपि हृदयमिति कथ्यते। उक्तञ्च सुश्रुतसंहितायां 'हृदयं मनसः पद' मिति। 'त्वया हृशीकेश हृदि स्थितेन,' 'हृद्देशे ऽर्जुन तिष्ठति' इत्याद्येतदनुकूलबहुलप्रयोगदर्शनाच्च द्रढ़ा भवति पूर्वोपस्थापिता युक्तिरिति। अतस्तु साम्प्रतमिदमप्यायाति, यत् हृदयं यथा शरीरस्य सारभूतमङ्गं तथा यत् किञ्चित् कस्यापि विषयस्य सारभूतं तदपि तस्य हृदयमिति हृदयं सार इत्यनर्थान्तरमिति। यथा हि—'मीमांसा हृदयं,' 'पुत्रो हृदयं' 'अक्षानां हृदयं परमिति वैदेशिक विबुधैरभिधीयते। ( St. Petersburg Dictionary ) तेन हि आदित्यस्य हृदयमिति षष्ठीसमासेन आदित्यसम्बन्धीयानि यानि यानि सारभूतानि मन्त्रयन्त्रादिकानि लभ्यन्ते तेषामेवैकत्रीकृतानां समुच्चयस्यैतदादित्यहृदयमिति संज्ञा।

अस्य विषयविभागस्त्वग्रे वक्ष्यते। तस्मात् सम्यगुपलभ्यं श्रीमद्भिः सार्थकनामैतदादित्यहृदयम्। आदित्यस्य भगवतो बहुत्र बहवो मन्त्राः पूजाप्रयोगा माहात्म्यविस्तराश्च दरीदृश्यन्ते। तेभ्य सारात् सारतरं गूढतमञ्च तत्वं समाकलय्य कृतमिदमादित्यहृदयमिति। वेदेभ्यः पुराणेभ्यस्तंत्रेभ्यश्च संगृहीतास्त्वत्र मंत्रादि विधयः। एतदपि आकरनिरूपणावसरे स्फुटीक्रियते। आदित्योऽयं प्रातर्मध्याह्ने सायञ्च त्रिधा भूत्वा पारविहीनस्य नभसोऽन्तं गच्छतीति प्रत्यक्षं दृश्यते। विष्णोर्यत्त्रिविक्रमत्वं तदपि श्रीमदादित्यस्य त्रिधागतिरिति सूक्ष्ममेतत्तत्वम्। तथाहि ऋक्संहितायामाम्नायते—(मं १ सू १५४)।

प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित् पदेभिः॥
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा।

एताभिरादित्यस्य विष्ण्वात्मकत्वमुक्तं युक्तिभिः। एतत् सर्वमत्रापि सुष्ठूल्लिखितमादित्यहृदये (आदित्यं पश्यते०।१३७। प्रत्यक्षो भगवान् विष्णु०।१२८। यन्मण्डलं सर्वगतस्य विष्णोः०। १५१। सशंखचक्रं०।१५७।) आदित्योऽयं पूर्वं पल्लवितेन त्रिधाभेदेन हरिहरब्रह्ममूर्त्तिर्भवतीत्यपि निगूढमपरं तत्वम्। गायत्रीति येयं नित्यमस्माभिः संध्यायते सापि भगवत आदित्यस्यैव मण्डलान्तर्वर्त्तिनी। मन्त्रोऽपि गायत्र्याः सवित्रात्मक इति। एतदपि प्रस्फुटीकृतमादित्यहृदये (त्रयीमयाय०।१३६। त्वं ज्योतिस्त्वं०।४८। उदये ब्रह्मणोरूपं०।११७)। एवञ्च मण्डलाष्टके

'पुनातु मां तत् सवितुर्वरेण्यं' इति तु यद्वारंवारमभिहितं तद् गायत्रीमन्त्रस्यैव प्रतिध्वनिरिव प्रतिभाति। वेदात्मायमादित्य इत्यपि तत्वान्तरमत्र विद्यते ( ऋग्वेदादि० । ४४ । कालात्मा ।६७। अग्निमीले० । १६६ । )

बौद्धतन्त्रेषु देवानां देवीनाञ्च स्तोत्रादिसंग्रहानां पञ्चसंख्यका विभागा प्रायेन दृश्यन्ते। सूत्रं पारमिता हृदयं धारणी मन्त्रो वीजञ्चेति। तेषु वीजमेकाक्षरं स्वल्पतमं सारात् सारभूतमिति, मन्त्रश्च तस्मादधिकाक्षरात्मकः, धारणी मन्त्रकदम्बकयुक्ता, हृदयं ततोऽप्यधिकं; पारमिता शताधिकश्लोका सहस्राधिकश्लोका वा ; सूत्रन्तु विस्तीर्णतममिति सविस्तरमालोच्यते बौद्धतन्त्रविशारदैरिति। अष्टसाहस्री प्रज्ञापारमिता शतश्लोकी प्रज्ञापारमिता। प्रज्ञापारमिताहृदयसूत्रम्। प्रज्ञापारमिताधारणी। प्रज्ञापारमितामन्त्रः। प्रज्ञापारमितावीजमिति त्रिभागप्रकारस्तेषां प्रमाण पदवीमारोहति। (Buddhist Esoterism P 55—61)

एवञ्चेदादित्यहृदयमपि आदित्यसंवन्धिस्तोत्रमन्त्रप्रभृतीनां पञ्चधाविभक्तानामेकतमम्। तच्चेदवशिष्टभागचतुष्टयं मृग्यं सुधीभिरित्यत्र माध्यस्थमवलम्ब्यते बौद्धतन्त्रज्ञानरहितैरस्माभिरिति। शारदातिलके तन्त्रे चतुर्दशपटले तु—

'आदित्यो देवता प्रोक्तो दृष्टादृष्टफलप्रदः।
सत्याय हृदयं प्रोक्तं ब्रह्मणे छिष्ट ईरितः॥ इति दृश्यते। एतेन तन्त्रशास्त्रेणापि सममस्यादित्यहृदयस्य संबन्धः कश्चिद्विद्यत इत्यनुमीयते।

## ( २ ) आदित्यहृदये विषय-विभागः ।

।१। प्रथमं तावन्मन्त्रत्रिकं स्पष्टं निरूपितं ततश्च न्यासविधिरुक्तः । २ । भास्वतोध्यानम् ( १ ) । ३ । यन्त्रलेखप्रकारः ( २-४ ) ४ । प्रार्थना ( ५-७ ) । ५ । न्यासविधिः ( ८-१४ ) । ६ । न्यासफलम् ( १५-२४ ) । ७ । आदित्यस्य शताधिकनामानि ( २५-३९ ) । ८ । कतिचन नमस्कारमन्त्राः ( ४०-५३ ) । ९ । सूर्य्यस्य मासि मासि विभिन्नानि नामानि ( ५४-५८ ) । १० । आदित्यस्य माहात्म्यम् ( ५९-६७ ) । ११ । विकर्त्तनप्रभृतीनि सारभूतानि नामानि ; तद्ग्रहणफलञ्च ( ६८-८८ ) । १२ । अमित्रदमनमन्त्रः ; तस्य फलं ; तस्य प्रतीकारमन्त्रश्च ( ८९-९० ) । १३ । पूजाप्रकारो, मन्त्रोद्धारः, तथार्घ्यदानप्रकारः ; प्रणतिविधिश्च ( ९८-१४१ ) । १४ । मण्डलाष्टकम् ( १४२-१५५ ) । १५ । नारायणेन सूर्य्यस्यैकात्मताप्रतिपादनम् ( १५६-१५९ ) । १६ । प्रणतिर्द्वादशादित्यनामानि च ( १६०-१६८ ) । १७ । सूर्य्यस्य वेदचतुष्टयमयत्वप्रदर्शनं प्रणतिश्च ( १६९-१७४ ) ।

## ( ३ ) भविष्यपुराणोक्ता पूजापद्धतिः ।

आदित्यहृदये योऽयं पूजनविधिरुक्तस्तेन भविष्यपुराणोक्तपूजाप्रकारस्य महत् सादृश्यं दृश्यते । अस्मिन् स्तोत्रे ये ये मन्त्रा समुल्लिखितास्तेषां याथार्थ्यनिरूपणाय भविष्यपुराणेनादित्यहृदयस्यान्तर्गूढ़संवन्धप्रकटनाय च कतिचन श्लोका उद्ध्रियन्ते ।

## वासुदेव उवाच

'अथार्चनविधिं वक्ष्ये धर्मकेतोरनुत्तमं। सूर्य्यमन्त्रैः पुरा स्नातो यजेत्तेनैव भास्करम्॥ द्विराचम्याथ संप्रोक्ष्य तनुं सप्ताक्षरेण च। उत्थायाचम्य तेनैव रवेः कृत्वार्घ्यमेव च। दत्वा तेनैव जप्त्वा तं स्वकं ध्यात्वार्कवद्धृदि। पूरकं कुम्भकं कृत्वा रेचकं च समाहितः। ध्यात्वा विशुद्धमात्मानं प्रणमेतार्कमास्थितं। देहं तेनैव सञ्चिन्त्य पञ्चभूतमयं परम्॥ सूक्ष्मं स्थूलं तथांक्षाणि स्वस्थानेषु प्रकल्प्य च। विन्यस्यांगानि खादीनि हृदाद्या निहृदादिषु। स्वः स्वाहा हृदयं भानोः खमर्काय शिवस्तथा। उल्का स्वाहा शिवार्कस्य यै च हुं कवचं परं॥ खां फड् अस्त्रं च संहारश्चादितः प्रणवः कृतः। सपूर्वं प्रणवस्याथो मन्त्रकर्मप्रसिद्धये॥ एभिर्जलं त्रिधा-जप्त्वा स्नानद्रव्याणि तेन च। संप्रोक्ष्य पूजयेत् सूर्यं गन्धपुष्पा-दिभिः शुभैः। आदित्यं मण्डलान्तस्थं तत्र देहं प्रकल्पयेत्। प्रभा-मण्डलमध्यस्थं ध्यात्वा देहं यथा पुरा॥ सर्वलक्षणसम्पूर्णं सहस्र-किरणोज्ज्वलं। रक्तगन्धैश्च पुष्पैश्च चरुभिर्वलिभिस्तथा॥ रक्त-चन्दनमिश्रैर्वा वस्त्रैरावरणैः शुभैः। आवाहनादि कर्माणि रक्षा तु हृदयेन च॥ तच्चित्तश्च सदा कुर्यात् ज्ञात्वा कर्मक्रमं बुधः। कृत्वा चावाहनं मन्त्रैरेकत्र स्थापनं ततः॥ यावद् यागावसानं तु सान्निध्यं तत्र कल्पयेत्। दत्वा पादादिकां पूजां शक्त्या वार्घ्यं निवेद्य च॥ प्रवक्ष्यामि जपस्थानं पद्मेशावरणे तथा। आदित्यं कर्णिकास्थं दलेष्वंगानि पूर्वशः॥ सोमादीन् राहुपर्य्यन्तान् ग्रहांश्चैवोदगादितः॥ मूर्त्तिमाँल्लोकपालांश्च क्रमादावरणेष्वथ।

तदस्त्राणि च रक्षार्थं स्वमन्त्रैः पूजयेत् क्रमात्। प्रणवैश्चाभिधानैश्च चतुर्थ्यामभियोजितैः ॥ सर्वेषां कथिताः पञ्च मुद्राश्च कथयाम्यतः ॥' अथ मन्त्रमुद्रा प्रकारः ॥ 'व्योममुद्रा रतिः पद्मा महाश्वेतास्त्रमेव च। पंचमुद्राः समाख्याताः सर्वकर्मप्रसिद्धये ॥ उत्तानौ तु करौ कृत्वा अङ्गुल्यो ग्रंन्थिताः क्रमात्। तर्जनीमेति यावत्ताः समैवाधोमुखे स्थिते ॥ तर्जन्यौ मध्यमस्यैव ज्येष्ठाग्रेनानुगोपरि। मुद्रेयं सर्वमुद्राणां व्योममुद्रेति कीर्त्तिता ॥ सर्वकर्मसु योगोऽयं तथा स्थानं प्रकल्पयेत। पद्मवत् प्रसृताः सर्वा महाश्वेता रवेः स्मृता ॥ जपसन्निहितो नित्यं रथारूढ़ो रविः स्मृतः। हस्तावूर्ध्वमुखौ कृत्वा वामाङ्गुष्ठेन योजयेत्। द्रव्यानां शोधने योज्या रक्षणार्थं विशेषतः। अर्घ्यं दत्वा प्रयोक्तव्या पूजान्ते च विशेषतः॥ जपध्यानावसाने च यदीच्छेत् सिद्धिमात्मनः॥ इति श्रीभविष्य महापुराणे सप्तमीकल्पे सूर्य्यमाहात्म्यवर्णनं नामैकोनपंचाशदध्यायः॥

## ( ४ ) अथ तन्त्रसारोक्तः सूर्य्यप्रयोगः।

एवं संपूज्य विधिवद्व भास्करं भक्तवत्सलम्। दद्यादर्घ्यं प्रतिदिनं वारे वा तस्य चोदिते ॥ प्रभाते मण्डलं कृत्वा पूर्ववत् पीठमर्चयेत्। पात्रं ताम्रमयं प्रस्थतोयग्राहि मनोहरम् ॥ निधाय तत्र मनुना पूरयेत् तच्छुभोदकैः। कुंकुमं रोचनाराजी रक्तचन्दनवेनचान्। करवीर-जवा-शालि-कुश-श्यामाक तंडुलान् निक्षिपेत् सलिले तस्मिन्नैक्यं संभाव्य भानुना॥ सांगमभ्यर्चयेत्तस्मिन् भास्करं प्रोक्तलक्षणम्। गन्धपुष्पादिनैवेद्यैर्यथाविधि विधानवत्॥

अपिधाय जपेन्मन्त्रं सम्यगष्टोत्तरं शतम्। पुनः संपूज्य गन्धाद्यै-र्जानुभ्यामवनिं गतः॥ आमस्तकं तदुद्धृत्य व्योम्नि सावरणे रवौ। दृष्टिं निधाय स्वैक्येन मूलमन्त्रं धिया जपन्॥ दद्यादर्घ्यं दिनेशाय प्रसन्नेनान्तरात्मना। दत्वा पुष्पाञ्जलिं भूयो जपेदष्टोत्तरं शतम्॥

## (५) अथ आदित्यहृदयस्याकरनिरूपणम्।

भविष्योत्तरपुराणपयोनिधिमथनोद्धृतरत्नभूतमिदमादित्य-हृदयमित्यत्र तु प्रचलितानां बहूनां पाठानामैकमत्यम्। किन्तु दौर्भाग्यादस्माकं नैव कुत्राप्यधुना मिलति भविष्योत्तरमिति नाम किमपि पुराणम्। भविष्यमहापुराणमिति नाम्ना किंचन महत् पुराणमधुनापि मुद्रापितं समुपलभ्यते। तत्र सूर्य्यसंबन्धीया बहवः स्तवादिका विद्यन्त एव किन्तु तेषु नैतदादित्यहृदयं नाम स्तोत्रं दृश्यते। भविष्यमहापुराणादितः प्रागेवास्माभिरुद्धृतपूर्वे सूर्य्यमाहात्म्यवर्णनाध्याये 'स्नानाद्धृदयपूतेन' 'रक्षां तु हृदयेन चेति खखोल्कादिका मन्त्रोद्धाराश्च दृश्यन्ते। सर्व एवैते भविष्यमहा-पुराणसम्बन्धीदमादित्यहृदयमिति सिद्धान्तस्य ध्वंसितसन्देह-ध्वान्तस्य प्रमाणपदवीमारोहन्ति। तत्र व्योमादिकाश्च याः पञ्च-मुद्रा उक्तास्ता अपि आदित्यहृदयस्य (१०६) श्लोकात् परस्थिताः पञ्चमुद्रा एव प्रपञ्चयन्तीत्यपि मन्यामहे। आदित्यहृदयभविष्य-पुराणयोरतिनिविडसम्बन्धस्थापनाय स्थानानि तुल्यरूपाण्युभयोः कानिचित् प्रदर्श्यन्ते। ग्रन्थान्तरेष्वपि स्तोत्रस्यास्य श्लोकैः समान-रूपाः केचन श्लोका अत्र निबध्यन्ते। भविष्यपुराणे—'एवं वै फाल्गुने सूर्य्यं चैत्रे वैशाख एव च। वैशाखे मासि धातारमिन्द्रं

ज्यैष्ठे यजेद्रविम्। आषाढे श्रावणे मासि नभं भाद्रपदे तथा ॥ तथाश्वयुजि पर्जन्यं त्वष्टारं कार्त्तिके यजेत्। मार्गशीर्षे च मित्रं च पौषे विष्णुं यजेद्यदि ॥ (ब्रह्म ।५०।१४-१६) ॥ आदित्यहृदये तु— 'अरुणो माघमासे तु सूर्य्यो वै फाल्गुने० ( ५४-५८ )। एवं च कूर्मपुराणे—'वरुणो माघमासे तु सूर्य्यो वै फाल्गुने तथा। चैत्रे मासि भवेदंशुर्धाता वैशाखतापनः ॥ ज्यैष्ठमासे तपेदिन्द्र आषाढे तपते रविः। विवस्वान् श्रावणे मासि प्रोष्ठपद्यां भगः स्मृतः। पर्जन्यश्चाश्विने त्वष्टा कार्त्तिके मासि भास्करः ॥ मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः ॥ ( पूर्व ४२।१८।२२ )। कैश्चिद् वैदेशिकैः प्रकाण्ड पण्डितैः सुदूरे वलिद्वीपे भारतवर्षीया ये ये मन्त्रतन्त्रादिकाः प्रचलन्ति तेषां कश्चित् संग्रहः कृतः। तत्र तु द्वादशादित्यस्तवे—'अरुणो माघमासे च विवस्वान् फाल्गुने स्मृतः। चैत्रे मासे भयेदंशुर्भानुर्वैशाख एव च ॥ ज्यैष्ठे मासे भवेदिन्द्र आषाढे अर्य्यमा स्मृतः। भगस्तिः श्रावणे मासे यमो भाद्रपदे तथा ॥ पर्जन्यश्चाश्विने मासे कार्त्तिके च दिवाकरः। मार्गशिरे स्यान्मित्रश्च पौषे विष्णुः स्मृतस्तथा ॥' इति दृश्यते ॥ तत्र 'सर्वजनविदितस्य भविष्योत्तरपुराणान्तर्गत इति ख्यातस्यादित्यहृदयस्यायमंश' इति तेषां विदुषां मतम्। ( Sanskrit Texts from BAL'. by Sylvain Levi. Gaekwad's Oriental Series P. Int. ( xxix P. 66 ) भविष्यपुराणे— 'रक्तचन्दनमिश्रैश्च करवीरैश्च सुव्रत। पूजयेद्देवदेवेशं शंकरं भास्करं रविम् ॥ ( ब्रह्म ५१।३। ४ )। आदित्यहृदये—'सकेश-

राणि पद्मानि० ( १०४ )। भविष्यपुराणे—'एष धाता विधाता च पूषा प्रकृतिभावनः। ( ब्रह्म० ६६।५३ )। आदित्यहृदये—'एष धाता विधाता च बीजं क्षेत्रं प्रजापतिः ( ६४ )। एवञ्चैतदपि विचार्य्यं विबुधधुर्य्यैर्यत् सुमन्तु ऋषिरस्यादित्यहृदयस्य वक्ता श्रोता च शशांकवंशावतंसः क्षौणीपतिः श्रीशतानीक इति। भविष्यमहापुराणस्यापि वेदाम्भोधिमथनमन्दरायमानस्य श्रीमत् कृष्णद्वैपायनस्य भगवतः शिष्यः सुमन्तुर्वक्ता शतानीकश्च श्रोता।

तथा च प्रपञ्चसारे पंचदशपटले—

भास्वद्रत्नौघमौलिः स्फुरदमृतरुचो रञ्जयच्चारुरेखां
सद्यः सन्तप्तकार्त्तस्वरकमलजवाभासुराभिः प्रभाभिः।
विश्वाकाशावकाशं ज्वलयदशिशिरं धर्त्तृपाशांकुशेष्टा-
भीतीनां भक्तितुङ्गस्तनमवतु जगन्मातुरार्कं वपुर्व्वः॥

आदित्यहृदये तु—'भास्वद्रत्नाढ्यमौलिः० ( १ )। विष्णुपुराणेऽप्यादित्यहृदयस्य 'आदित्यः प्रथमं नामेत्युपक्रस्य श्लोकत्रयी ( १६३-६५ ) विद्यते। प्रपञ्चसारे तु 'दीप्ता सूक्ष्मे' त्यादिक, श्लोकः ( ४ ) समग्रो दृश्यते। शारदातिलके चतुर्द्दशपटले सूर्य्यमन्त्रोद्धारो यथा—'दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा। अमोघा विद्युता सर्वतोमुखी पीठशक्तयः॥ अक्लीवहृस्व त्रितयस्वरान् बिन्द्वग्निसंयुतान्। वदेत् पदं चतुर्थ्यन्तं ब्रह्माविष्णुशिवात्मकम्। सौराय योगपीठाय नमः पदमनन्तरम्। पीठमन्त्रोऽयमाख्यातो दिनेशस्य जगत्पतेः। तारादि खं खखोल्काय मनुना मूर्त्तिकल्पना॥ ( ३६।४१—।४३ )।

## ( ६ ) अथ आदित्यहृदयस्य रचनाशैली ।

श्रीमद्द्वैपायनेन भगवता लिखितेषु महाभारतपुराणादिकेषु येयं मनोहारिणी रचनारीतिर्मधुरतया प्राञ्जलतया भावघनतया च सर्वेषामेव विदुषां प्रीतिमुत्पादयति सेयमत्रापि सम्यगनुसृता । 'स्वर्णवर्णप्रभाभिः' 'बुद्धो बुद्धासनो बुद्धिः' 'त्रिगुणश्च त्रितत्त्वश्च' 'तिथिकरणमुहूर्त्तकालचक्र' मित्यादिषु माधुर्य्यं सहृदयधुर्य्याणां मनो हरति । 'प्रतिगृह्य' 'समारभेत्' 'व्योमाय' 'लभेद्' इत्यादिकानि पाणिनिगोष्पदवहिर्भूतानि पदरत्नान्यपि प्राचीनत्वमस्या द्रढयन्ति । प्रथमद्वितीययोस्तथा तृतीयचतुर्थयोश्चरणयोर्मध्ये सन्धिरत्र प्रायशो नैव विहितः । विदितमेतत् सर्वेषां यद्व्यासस्य तत्सम्प्रदायस्य च एषैव शैलीति ।

## ( ७ ) आदित्यहृदयस्य समयनिरूपणम् ।

पूर्व्वमेव यद् यदस्माभिरुद्धृतं ग्रन्थान्तरेभ्यस्तेन तेन तु भाषागतवैचित्र्येण महाभारतादर्वाचीनमिदमादित्यहृदयमिति प्रतिभाति । तेन खृष्टजन्मनः पूर्वतनी चतुर्थशताब्द्येवास्य प्राचीनत्वस्य सीमेति स्यात् । इयं हि खृष्टीया विंशशताब्दी । तेन सार्द्धद्विसहस्रवत्सरानतीत्यैतत् स्वमहिम्ना वर्त्ततेतराम् । अत्र पुराणेतिहासादीनां कानिचिन्मानानि प्रकटीक्रियन्ते । 'कुरुक्षेत्रे महाराज ! निवृत्ते भारते रणे' इति त्वत्रैव दृश्यते तेन नैतत् कुरुक्षेत्रसमरात् पूर्व्वतनमित्यत्र नास्ति सन्देहलवस्य कोऽप्यवसरः । कुरुक्षेत्रक्षत्रप्रधनस्य काले निरूपिते स्तोत्रस्यास्य प्राचीनत्वस्य

सीमा नूनं निर्द्धारिता स्यादित्यत्र सर्वेषामेवंकमत्यमिति। अत्र प्रकाण्डपण्डिताः प्रधानमहोदयास्तु कुरुक्षेत्रसमरं खृष्टपूर्वाया-मेकादशशताब्द्यामेव सञ्जातमिति मन्यन्ते। (Chronology of Ancient India. Pradhan P. 255) एवञ्च सति वैदिक-युगस्य चरमे भागे समुद्भूतमेतदिति प्रमाणितं स्यात्। नेयम-सम्भवा परिकल्पना, यतो वैदिकग्रन्थेषु सांख्यायनाश्वलायन-श्रौतसूत्रादिषु भारतयुद्धं दृश्यते। अत्र विद्वद्भिर्विचार्य्यं समाधान-मिति। वैदेशिकविद्वांसस्तु खृष्टपूर्वचतुर्थशताब्दीतः खृष्टीय चतुर्थ शताब्दींपर्य्यन्तमष्टशतवर्षपरिमितं कालं महाभारतसम्पा-दनकालं मन्यन्ते। वीजरूपेणास्य प्रधानाख्यायिका वैदिकग्रन्थेषु दृश्यते ततश्च दिने दिने प्रचितावयवोऽवान्तराख्यानैरयं विशालो भारतग्रन्थः सञ्जात इति तेषां मतिः। (Winternitz History of Indian Literature Vol 1 P. 460-75)

अस्त्यस्माकमपरः कोऽप्युपायः कालनिरूपणायादित्यहृदय-स्येति। भविष्यपुराणे योऽयं सुमन्तुर्जैमिनिसुतः शतानीकश्च राजा विद्येते तावेवास्य स्तोत्रस्यापि वक्तृश्रोतारौ। तयोः समय-निर्द्धारणेनापि कार्य्यमस्माकं सिध्यतीति। सुमन्तुरयं जैमिनि-सुतो व्यासशिष्यश्चेति। तत्र प्रमाणं—'पुत्रमध्यापयामास सुम-न्तुमथ जैमिनि' रिति वायु पुराणे। व्यासश्च भगवान् पाण्डौ धृतराष्ट्रे च शासति क्षितौ वेदविभागाय चतुरः शिष्यान् पैलजैमिनिवैशम्पायनसुमन्तुमुनिवर्य्यान् निजसहायकत्वेनाङ्गी-चकार। शतानीकश्च भूपतिः पाण्डवानामधस्तनश्चतुर्थः पुरुषः।

तेन महाभारतस्योत्तरे काले एवैतत् स्तोत्रमपि समुत्पन्नमित्यत्र नास्ति शंकापंकलेशोऽपि। (Chronology of ancient India P. 125-27, 131, 197, P. 59, 124, 159, 224-58)

एवञ्च स्तवराजस्यास्य महान् प्रचार आसीत् प्राचीनकालेषु। कुरुपाण्डवकालेभ्य आरभ्य नित्यमेवैतदुच्चार्य्यते भक्तिप्रह्वैरुणकरुणाकणाभिलाषुकैः सौरतन्त्रपारंगमैरिति। भारतेभ्योऽतीवदूरवर्त्तिषु महासागरान्तरितेषु वलिद्वीपेष्वपि स्तवस्यास्य प्रचारो दृश्यते। पदवाक्यप्रमाणपारावारपारीणः पञ्चानन इवाख्यायिकाख्याननिपुणो युवजनमानसोन्मादनपञ्चवाण इव वाणः प्रचारवाहुल्यमालोक्यादित्यहृदयोक्तपूजाप्रकारस्य हर्षचरिते तदेव स्फुटं विवृणोति—

'निसर्गत एव स नृपतिरादित्यभक्तो वभूव। प्रतिदिनमुदये दिनकृतः स्नातः सितदुकूलधारी धवलकर्पटप्रावृतशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुम्कुमपंकानुलिप्ते मण्डलके पवित्र पद्मरागपात्रीनिहितेन स्वहृदयेनेव सूर्य्यानुरक्तेन रक्तकमलषण्डेनार्चां ददौ।'

हर्षवर्द्धन समकालीनोऽयं वाणः खृष्टीयसप्तमशताब्द्यामेव महीमलंचकारेति भारतीयेतिहासविद्भिर्ध्वंसितसंशयं निरुपितमिति। तेन खृष्टपूर्वचतुर्थशताब्दीतो नैतत् प्राचीनतरं, खृष्टीय सप्तमशताब्दीतश्च नाप्यर्वाचीनमिति सिद्धान्तः। वलिद्वीपलिपिर्येयं पूर्वमेवोद्धृता सा खृष्टीयाष्टमशताब्दीया नवमशताब्दीया वेति निर्णीता। सापि सिद्धान्तमेतं दृढयति।

## ( ८ ) आदित्यहृदयस्य पाठभेदाः ।

आदावेव निवेदितमस्माभिर्विबुधधुरीणाः! यद्बहवः पाठभेदाः देशभेदतः कालभेदतश्चास्य स्तवस्य दृश्यन्ते। तेषां कतमः साधुः कतमो वा प्रक्षिप्त इति सूक्ष्मविचारस्य सामर्थ्यं नास्माकं जडमतीनां विद्यते। अतस्तु सर्व एवैते एकादिसंख्याचिह्निता भवतामेव पुरतः समुपस्थाप्यन्ते :—

।१। तेषु स्वर्गतश्रीमद्भगवत्पादत्रिविक्रमतीर्थस्वामिभिः स्वहस्तेन शोधिते वाराणसीनगरीतो भार्गवपुस्तकालयाध्यक्षेण प्रकाशिते पुस्तके।१। संख्या न्यस्ता।

।२। श्रीमत् स्वामिपादानां स्वहस्तलिखितं पुस्तकं।२। संख्यया चिह्नितम्।

।३। नेपालदेशीयः पाठः सुब्बा होमनाथ केदारनाथप्रकाशितः।३। संख्ययोल्लिखितः।

।४। बङ्गीयपाठस्तु श्रीअविनाशचन्द्र मुखोपाध्यायसंकलितस्तत्रकवचमालाधृतः।४। संख्ययैवाङ्कितः।

।५। अस्माभिरेव कतिपयपुस्तकसमालोचनपूर्व्वकं वर्षपञ्चकात् प्राग् लिखितं स्तोत्रं।५। संख्यया समुपस्थाप्यते।

।६। नवद्वीपनिवासिनां स्वर्गतानां प्रधानस्मार्त्तानां लालमोहन विद्यावागीशभट्टाचार्य्यचरणानां पाठस्तु ।६। संख्यया लिख्यते।

।७। संख्यकन्त्वस्माकं पितामहपादानामतिप्राचीनं किमपि पुस्तकं बहुत्र विशुद्धपाठमण्डितमुद्ध्रियते।

दोषो वात्र गुणो वात्र विचार्य्यः साम्प्रतं बुधैः।
विदितो राजहंसानां को भेदः क्षीरनीरयोः॥
लब्धो विद्वन्! यदि गुणकणो मद्गुरोर्ज्ञानिनोऽसौ
भूयान् दोषः क्वचिदपि यदि ज्ञानहीनस्य मेऽयम्।
पुण्या सेयं स्मृतिरपि चिरं शंकराचार्य्यवर्य्य-
श्रीश्रीत्रैविक्रमभगवतः शाश्वती नः पुनातु॥

शारदीया पञ्चमी
१३४३

इति
विदुषां विधेयस्य पूज्यश्रीस्वामिपादानां
चरणसरोजमरन्दलुब्धमिलिन्दायमानस्य
श्रीदेवीप्रसादव्याकरणतीर्थस्य।

---

ॐ

# अथ नवग्रहस्तोत्रं प्रारभ्यते

जवा[1] कुसुम संकाशं काश्यपेयं महाद्युतिम् ।
ध्वान्तारिं[2] सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ १ ॥
दधि[3]शंखतुषाराभं क्षीरोदार्णवसंभवम् ।
नमामि शशिनं सौम्यं[4] शम्भोर्मुकुटभूषणम् ॥ २ ॥
धरणीगर्भसंभूतं विद्युत्पुञ्ज[5]समप्रभम् ।
कुमारं शक्तिहस्तं च[6] मङ्गलं प्रणमाम्यहम्[7] ॥ ३ ॥
प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ।
सौम्यं सर्व-गुणोपेतं नमामि शशिनः सुतम्[8] ॥ ४
देवतानामृषीणाञ्च[10] गुरुं काञ्चन[11]सन्निभम् ।
बुद्धिभूतं[12] त्रिलोकेशं तं नमामि बृहस्पतिम् ॥ ५ ॥
हिम[13]कुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ ६ ॥

---

१ जपा २ तमोऽरिं ३ दिव्य ४ भक्तया ५ विद्युच्चक्र; विद्युत् कान्ति ६ शक्तिसंहस्तं ७ लोहितांगं नमाम्यहम् ८ सौम्य ९ तं बुधं प्रणमाम्यहं १० देवानांच ऋषीणांच ११ कनक १२ वन्द्यभूतम् १३ हेम ।

नीलाञ्जनचयप्रख्यं[१] रविपुत्रं[२] यमाग्रजम्[३] ।
छायामार्त्तण्डसम्भूतं[४] तं नमामि[५] शनैश्चरम् ॥७॥
अर्द्धकायं महावीर्य्यं[६] चन्द्रादित्यविमर्दकम्[७] ।
सिंहिकायाः सुतं रौद्रं[८] तं राहुं प्रणमाम्यहम् ॥ ८
पलालधूमसंकाशं[९] ताराग्रहविमर्दकम्[१०] ।
रौद्रं रौद्रात्मकं क्रूरं[११] तं केतुं प्रणमाम्यहम् ॥६॥
इति व्यासमुखोद्गीतं यः पठेत् सुसमाहितः ।
दिवा वा यदि वा रात्रौ शान्तिस्तस्य न संशयः ॥१०
नरनारीनृपाणाञ्च भवेद् दुःस्वप्ननाशनम् ।
ऐश्वर्य्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ॥ ११ ॥
ग्रहनक्षत्रजाः पीडास्तस्कराग्निसमुद्भवाः ।
ताः सर्वाः प्रशमं यान्ति व्यासो ब्रूते न संशयः ॥१२

इति श्रीमद् वेदव्यासरचितमादित्यादिनवग्रहस्तोत्रं सम्पूर्णम् ।

---

१ समाभासं २ सूनुं ३ महाग्रहं ४ छायाया गर्भसंभूतम् ५ वन्दे भक्त्या ६ महाघोरं ७ विमर्दनम् ८ सिंहिकागर्भसंभूतं ९ पलाशपुष्पसंकाशं १० तारकाग्रहमस्तकम् ११ घोरं ।

ॐ

रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं भजामि ।
पद्मद्वयाभयवरान् दधतं कराब्जै-
र्माणिक्यमौलिमरुणांगरुचिं त्रिनेत्रम् ॥

( तन्त्रसारोक्तं ध्यानम् )

# अथ आदित्यहृदयं प्रारभ्यते



शतानीक उवाच ।

कथमादित्यमुद्यन्तमुपतिष्ठे[1] द्विजोत्तम ! ।
एतन्मे ब्रूहि विप्रेन्द्र ! प्रपद्ये शरणं तव ॥ १ ॥

सुमन्तरुवाच ।

इदमेव पुरा पृष्टः शंखचक्रगदाधरः ।
प्रणम्य शिरसा देवमर्जुनेन महात्मना ॥ २ ॥
कुरुक्षेत्रे महाराज निवृत्ते[2] भारते रणे ।
कृष्णनाथं समासाद्य प्रार्थयित्वाऽब्रवीदिदम् ॥३॥

---

(१) मुपतिष्ठे ।४।
मुपतिष्ठेद् ।१।२।३।५।

(२) निवृत्ते ।१।२।३।
प्रवृत्ते ।४।५।६।७।

अर्जुन उवाच ।

ज्ञानं च धर्म[१]शास्त्राणां गुह्याद् गुह्यतरं तथा ।
मया कृष्ण ! परिज्ञातं वाङ्मयं सचराचरम् ॥४॥
सूर्य्यस्तुतिमयं न्यासं वक्तुमर्हसि माधव !
भक्त्या पृच्छामि देवेश ! कथयस्व प्रसादतः ॥५॥
सूर्य्यभक्तिं करिष्यामि कथं सूर्य्यं प्रपूजये[२] ।
तदहं श्रोतुमिच्छामि त्वत्प्रसादेन यादव ! ॥ ६ ॥

श्रीभगवानुवाच ।

रुद्रादिदैवतैः सर्वैः पृष्टेन कथितं मया ।
वक्ष्येऽहं सूर्य्यविन्यासं शृणु पाण्डव ! यत्नतः ॥७॥
अस्माकं यत्त्वया पृष्टमेकचित्तो भवार्जुन !
तदहं संप्रवक्ष्यामि आदिमध्यावसानकम् ॥ ८ ॥

अर्जुन उवाच ।

नारायण ! सुरश्रेष्ठ ! पृच्छामि त्वां महायशः !
कथमादित्यमुद्यन्तमुपतिष्ठे[३] सनातनम् ॥ ९ ॥

---

(१) धर्म ।१।२।३।४।७।
सर्व ।५।६।

(२) प्रपूजये ।४।५।६।
प्रपूजयेत् ।१।२।३।७।

(३) तिष्ठे ।४।५।६।
तिष्ठेत् ।१।२।३।७।

श्रीभगवानुवाच ।

साधु पार्थ ! महाबाहो ! बुद्धिमानसि पाण्डव !
यन्मां पृच्छस्युपस्थानं तत् पवित्रं विभावसोः ॥१०
सर्वमंगलमांगल्यं सर्वपापप्रणाशनम् ।
सर्वरोग-प्रशमनमायुर्वर्धनमुत्तमम् ॥ ११ ॥
अमित्रदमनं पार्थ ! संग्रामे जयवर्धनम् ।
वर्धनं धनपुत्राणामादित्यहृदयं शृणु ॥ १२ ॥
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते[1] नात्र संशयः ।
त्रिषु लोकेषु विख्यातं निःश्रेयसकरं परम् ॥१३॥
देवदेवं नमस्कृत्य प्रातरुत्थाय चार्जुन !
विघ्ना अनेकरूपाश्च[2] नश्यन्ति स्मरणादपि ॥१४॥
तस्मात् सर्वप्रयत्नेन सूर्य्यमाराधयेत्[3] सदा ।
आदित्यहृदयं नित्यं जाप्यं तच्छृणु पाण्डव[4] ॥१५॥

---

(१) मुच्यते ।१।२।३।४।७ मुच्यसे ।४।

(२) विघ्ना अनेकरूपाश्च ।४।५। विघ्नान्यनेकरूपाणि ।१।२।३।६।७।

(३) माराधयेत् ।१।२।५।६। मावाहयेत् ।३।४।७।

(४) जाप्यं तच्छृणु पाण्डव ।१।२।३।४। जपेद्व यः शृणुयादपि ।५।६।

यज्जपान्मुच्यते जन्तुर्दारिद्र्यादाशु दुस्तरात्[१] ।
लभते च महासिद्धिं कुष्ठव्याधिविनाशिनीम् ॥१६
अस्मिन् मन्त्रे ऋषिश्छन्दो देवता शक्तिरेव च ।
सर्वमेव महाबाहो ! कथयामि तवाग्रतः ॥ १७ ॥
मया तु[२] गोपितं न्यासं सर्वशास्त्रप्रबोधितम् ।
अथ ते कथयिष्यामि उत्तमं मन्त्रमेव च ॥ १८ ॥

ॐ अस्य आदित्यहृदयस्तोत्रमन्त्रस्य श्रीकृष्ण[३] ऋषिः । श्रीसूर्य्यात्मा[४] त्रिभुवनेश्वरो देवता । अनुष्टुप् छन्दः । हरितहयरथं दिवाकरं घृणिरिति बीजम् । ॐ नमो भगवते[५] जितवैश्वानरजातवेदसे इति शक्तिः । ॐ नमो भगवते आदित्याय नमः इति कीलकम् । ॐ अग्नि-

---

(१) यज्जपान्मुच्यते जन्तुर्दारिद्र्यादाशु दुस्तरात् ।१।२।३।४।
तस्य व्याधिभयं नास्ति भूतानां भयमेव च ।६।

(२) तु ।४।५।
ते ।१।२।३।

(३) श्रीकृष्ण ।१।२।३।५।६।
श्रीकृष्णः परमात्मा ।४।

(४) श्रीसूर्य्यात्मा ।१।२।३।४।५।
श्रीसूर्य्यनारायणो ।६।

(५) भगवते ।२।३।४।५।६।
अमिततेजसे ।१।

गर्भदेवता इत्यस्त्रम्[१]। ॐ नमो भगवते तुभ्य-मादित्याय नमो नमः इति मन्त्रः[२]। श्रीसूर्य्य-नारायणप्रीत्यर्थे जपे विनियोगः ।

अथ न्यासः ।

ॐ ह्रां अंगुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनी-भ्यां नमः । ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः । ॐ ह्रौं कनिष्ठकाभ्यां नमः । ॐ ह्रः करतलपृष्ठाभ्यां नमः । ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐ ह्रूं शिखायै वषट् । ॐ ह्रैं कवचाय हुम् । ॐ ह्रौं नेत्रत्रयाय वौषट् । ॐ ह्रः अस्त्राय फट् । ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः । इति दिग्बन्धः ।

अथ ध्यानम् ।

भास्वद्रत्नाढ्यमौलिः स्फुरद-
धररुचा रञ्जितश्चारुकेशो ।

---

(१) इत्यस्त्रम् ।१।३। इति मन्त्रः ।२।४।७। (२) इतिमन्त्रः ।१।३। ।२।४।५। पुस्तकेषु नास्ति

भास्वान् यो दिव्यतेजाः[1]

करकमलयुतः स्वर्णवर्णप्रभाभिः ।

विश्वाकाशावकाशग्रहपति-

शिखरे भाति यश्चोदयाद्रौ ।

सर्वानन्दप्रदाता हरिहरनमितः

पातु मां विश्वचक्षुः ॥ १ ॥

अथ यन्त्रलेखप्रकारः ।

पूर्वमष्टदलं पद्मं प्रणवादिप्रतिष्ठितम् ।
मायाबीजं दलाष्टाग्रे यन्त्रमुद्धारयेदिति ॥ २ ॥
आदित्यं भास्करं भानुं रविं सूर्य्यं दिवाकरम् ।
मार्त्तण्डं तपनं चेति दलेष्वष्टासु योजयेत ॥ ३ ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ।
अमोघा विद्युता चेति मध्ये श्रीः सर्वतोमुखी ॥४

---

(१) भास्वान् यो दिव्यतेजाः करकमलयुतः ।१।३।४।५।७।
भास्वन्तं दिव्यतेजः करकमलयुतं ।२।

अथ प्रार्थना ।

सर्वज्ञं सर्वगं चैव सर्वकारणदैवतम्[1] ।
सर्वेशं सर्वहृदयं नमामि सर्वसाक्षिणम् ॥ ५ ॥
सर्वात्मा सर्वकर्त्ता च सृष्टिजीवनपालकः ।
हितः स्वर्गापवर्गश्च भास्करेश ! नमोऽस्तु ते ॥६॥
नमो नमस्तेऽस्तु सदा विभावसो
सर्वात्मने सप्तहयाय भानवे[2] ।
अनन्तशक्ते ! मणिभूषणाय ते[3]
ददस्व भुक्तिं मम मुक्तिमव्ययाम् ॥ ७ ॥

अथ न्यासविधिः ।

अर्कन्तु मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत् ।
विन्यसेन्नेत्रयोः सूर्यं कर्णयोश्च दिवाकरम् ॥८॥
नासिकायां न्यसेद्भानुं मुखे वै भास्करं न्यसेत् ।
पर्जन्यमोष्ठयोश्चैव तीक्ष्णं जिह्वान्तरे न्यसेत् ॥९॥

---

(१) दैवतम् ।४।५।
देवताम् ।१।
सर्वज्ञः सर्वगश्चैव सर्वकारणदेवता ।२।३।

(२) भानवे ।२।३।४।५।
भाविने ।१।

(३) अनन्तशक्तिर्मणिभूषणेन ।१।२।३।७।
अनन्तशक्ते ! मणिभूषणाय ते ।४।५।

सुवर्णरेतसं कण्ठे स्कन्धयोस्तिग्मतेजसम् ।
बाह्वोस्तु पूषणं चैव मित्रं वै पृष्ठतो न्यसेत् ॥१०॥
वरुणं दक्षिणे हस्ते त्वष्टारं वामतः करे ।
हस्ता[1]वुष्णकरः पातु हृदयं पातु भानुमान् ॥११॥
उदरे तु यमं विद्यादादित्यं नाभिमण्डले ।
कट्यां तु विन्यसेद्धंसं रुद्रमुर्वोस्तु विन्यसेत् ॥१२॥
जान्वोस्तु[2] गोपतिं न्यस्य सवितारं तु जङ्घयोः ।
पादयोश्च विवस्वन्तं गुल्फयोश्च दिवाकरम् ॥१३॥
बाह्यतस्तु तमोध्वंसं भगमभ्यन्तरे न्यसेत् ।
सर्वाङ्गेषु सहस्रांशुं दिग्विदिक्ष्वभयं[3] न्यसेत् ॥१४
एष आदित्यविन्यासो देवानामपि दुर्लभः ।
इमं भक्त्या न्यसेत् पार्थ! स याति परमां गतिम् ।१५
कामक्रोधकृतात् पापान्मुच्यते नात्र संशयः ।
सर्पादपि भयं नैव संग्रामेषु पथिष्वपि ॥ १६ ॥

---

(१) हस्ता ।१।२।३।४।७। कुक्षा ।५।६।

(२) जान्वोस्तु ।२।३।४।५।६।७। जानुनोः ।१।

(३) दिग्वदिक्ष्वभयं ।५।६। दिग्विदिक्षु भगं ।१।२।३।४।७।

रिपुसंघट्ट[1]कालेषु तथा चौरसमागमे ।
त्रिसन्ध्यं जपतो न्यासं[2] महापातकनाशनम् ॥१७
विस्फोटकसमुत्पन्नं तीव्रज्वरसमुद्भवम् ।
शिरोरोग-नेत्ररोग[3]सर्वव्याधिविनाशनम् ॥१८॥
कुष्ठव्याधिस्तथादद्रुरोगाश्च विविधाश्च ये ।
जपमानस्य नश्यन्ति शृणु भक्त्या तदर्जुन ! ॥१९
आदित्यो मन्त्रसंयुक्त आदित्यो भुवनेश्वरः ।
आदित्यान्नापरो देवो ह्यादित्यः परमेश्वरः ॥२०॥
आदित्यमर्चयेद् ब्रह्मा[4] शिव आदित्यमर्चयेत्[5] ।
यदादित्यमयं[6] तेजो मम तेजस्तदर्जुन ! ॥२१॥

---

(१) संघट्ट ।२।३।४
संकट ।१।५।६।
(२) जपतो न्यासं ।२।५।४।५।७।
जपते न्यासं ।१।
वै जपेन्न्यासं ।६।
(३) शिरोरोगं नेत्ररोगं ।१।२।३।४।६।
शिरोरोग-नेत्ररोग ।५।७।
(४) मर्चयेद्ब्रह्मा ।१।४।५।६।७।
मर्चते ब्रह्मा ।२।
मर्चयेद्भक्तया ।३।
(५) शिव आदित्यमर्चयेत् ।१।४।५।७।
शिवमादित्यमर्चयेत् ।३।
शिव आदित्यमर्चते ।२।
आदित्यमर्चयेच्छिवः ।६।
(६) मयं ।१।२।३।४।
गतं ।५।६।

आदित्यं मन्त्रसंयुक्तमादित्यं भुवनेश्वरम् ।
आदित्यं ये प्रपश्यन्ति मां पश्यन्ति न संशयः ॥२२
त्रिसन्ध्यमर्चयेत् सूर्य्यं स्मरेद्भक्त्या तु यो नरः ।
न स पश्यति दारिद्र्यं जन्मजन्मनि चार्जुन ॥२३
एतत्ते कथितं पार्थ ! आदित्यहृदयं मया ।
यच्छ्रुत्वा मुच्यते पापात् सूर्यलोकं च गच्छति[1] ॥२४
ॐ नमो भगवते तुभ्यमादित्याय नमो नमः ।
आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।२५
सुवर्णः स्फटिको भानुः स्फुरितो विश्वतापनः ।
रविर्विश्वं महातेजाः सुवर्णः सुप्रबोधकः ॥ २६ ॥
हिरण्यगर्भस्त्रिशिरास्तपनो भास्करो रविः ।
मार्त्तण्डो गोपतिः[2] श्रीमान् कृतज्ञश्च प्रतापवान् ॥
॥ २७ ॥

---

(१) यच्छ्रुत्वा मुच्यते पापात् सूर्य्यलोकं च गच्छति ।५।६
मुच्यते सर्वपापेभ्यः सूर्य्यलोके महीयते ।१।२।
शृण्वन् मुक्तश्च पापेभ्यः सूर्य्यलोके महीयते ।३।४।
(२) गोपतिः ।२।३।४।५।६।७।
गोपितः ।१।

तमिस्रहा भगो हंसो नासत्यश्च तमोनुदः ।
शुद्धो विरोचनः केशी सहस्रांशुर्महाप्रभुः ॥ २८ ॥
विवस्वान् पूषणो मृत्युर्मिहिरो जामदग्न्यजित् ।
धर्मरश्मिः पतङ्गश्च शरण्योऽमित्रहा तपः ॥ २९ ॥
दुर्विज्ञेयगतिः शूरस्तेजोराशिर्महायशाः ।
शम्भुश्चित्राङ्गदः सौम्यो हव्यकव्यप्रदायकः ॥३०
अंशुमानुत्तमो देव ऋग्-यजुः-साम एव च ।
हरिदश्वस्तमोदारः[1] सप्तसप्तिर्मरीचिमान् ॥ ३१॥
अग्निगर्भोऽदितेः पुत्रः शम्भुस्तिमिरनाशनः ।
पूषा विश्वम्भरो मित्रः सुवर्णः सुप्रतापवान् ॥३२॥
आतपी मण्डली भास्वांस्तपनः सर्वतापनः ।
कृतविश्वो महातेजाः सर्वरत्नमयोद्भवः ॥ ३३ ॥
अक्षरश्च क्षरश्चैव[2] प्रभाकरविभाकरौ ।
चन्द्रश्चन्द्राङ्गदः सौम्यो हव्यकव्यप्रदायकः ॥३४॥

---

(१) स्तमोदारः ।१।२।३।४।७।
स्तमोहारी ।५।६
(२) अक्षरश्च क्षरश्चैव ३।४।५।६।७
अक्षरश्चाक्षरश्चैव ।१।२।

अङ्गारकोऽङ्गदोऽगस्ती[१] रक्ताङ्ग[२]श्चाङ्गवर्धनः ।
बुद्धो[३] बुद्धासनो बुद्धिर्बुद्धात्मा[४] बुद्धिवर्धनः ॥३५॥
बृहद्भानुर्बृहद्भासा[५] बृहद्धामा बृहस्पतिः ।
शुक्रस्त्वं शुक्ररेतास्त्वं शुक्राङ्गः शुक्रभूषणः ॥ ३६ ॥
शनिमान् शनिरूपस्त्वं शनैर्गच्छसि सर्वदा ।
अनादिरादिरादित्यस्तेजोराशिर्महातपाः ॥ ३७ ॥
अनादिरादिरूपस्त्वमादित्यो दिक्पतिर्यमः ।
भानुमान् भानुरूपस्त्वं स्वर्भानुर्भानुदीप्तिमान् ।३८
धूम[६]केतुर्महाकेतुः सर्वकेतुरनुत्तमः ।
तिमिरावरणः[७] शम्भुः स्त्रष्टा मार्त्तण्ड एव च ॥३९

---

(१) अङ्गारकोऽङ्गदोऽगस्ती ।१।३। अङ्गारकोऽङ्गदो हस्ता ।२। अङ्गारको गदोऽगस्ती ।४।७। अङ्गारको महाङ्गारो ।५।६।

(२) रक्ताङ्गः ।१।२।३।४।५। ऽव्यक्ताङ्गः ।६।

(३) बुद्धो ।१।३।५।६। बुधो ।२।४।७।

(४) बुद्धात्मा ।१।२।३।४।५। बुद्ध्यात्मा ।६।

(५) बृहद्भासा ।४। बृहद्भासो ।१।२।३।५।६।

(६) धूम ।२।३।४।५।६।७। धूम्र ।१।

(७) तिमिरावरणः ।१।२।३।४।७। तिमिरापहरः ।५।६

नमः पूर्वाय गिरये पश्चिमाय नमो नमः ।
उत्तराय नमस्तुभ्यं[1] दक्षिणाय नमो नमः ॥४०॥
नमो नमः सहस्रांशो ! ह्यादित्याय नमो नमः ।
नमः पद्मप्रबोधाय नमस्ते द्वादशात्मने ॥ ४१ ॥
नमो विश्वप्रबोधाय नमो भ्राजिष्णुजिष्णवे ।
ज्योतिषे च नमस्तुभ्यं ज्ञानार्काय नमो नमः ॥४२
प्रदीप्ताय प्रगल्भाय युगान्ताय नमो नमः ।
नमस्ते होतृपतये पृथिवीपतये नमः ॥ ४३ ॥
नमोङ्कार[2] ! वषट्कार ! सर्वयज्ञ ! नमोऽस्तु ते ।
ऋग्वेदादियजुर्वेदसामवेद ! नमोऽस्तु ते ॥ ४४ ॥
नमो हाटकवर्णाय भास्कराय नमो नमः ।
जयाय जयभद्राय हरिदश्वाय ते नमः ॥ ४५ ॥
दिव्याय दिव्यरूपाय ग्रहाणां पतये नमः ।
नमस्ते शुचये नित्यं नमः कुरुकुलात्मने[3] ॥ ४६ ॥

---

( १ ) उत्तराय नमस्तुभ्यं ।५।६।
नमोत्तराय गिरये ।१।२।३।४।७।

( २ ) नमस्कार (?)

( ३ ) नमः कुरुकुलात्मने ।१।२।३।४।७।
सर्वाङ्कुरकलात्मने ।५।६।

नमस्त्रैलोक्यनाथाय भूतानां पतये नमः ।
नमः कैवल्यनाथाय नमस्ते दिव्यचक्षुषे ॥ ४७ ॥
त्वं ज्योतिस्त्वं द्युतिर्[1]ब्रह्मा त्वं विष्णुस्त्वं प्रजापतिः ।
त्वमेव रुद्रो रुद्रात्मा वायुरग्निस्त्वमेव च ॥ ४८ ॥
योजनानां सहस्रे द्वे द्वे शते द्वे च योजने ।
एकेन निमिषार्द्धेन क्रममाण ! नमोऽस्तु ते ॥४९॥
नवयोजनलक्षाणि[2] सहस्रद्विशतानि च ।
यावद्घटीप्रमाणेन क्रममाण नमोऽस्तु ते[3] ॥५०॥
अग्रतश्च नमस्तुभ्यं पृष्ठतश्च सदा नमः ।
पार्श्वतश्च नमस्तुभ्यं नमस्ते चास्तु सर्वदा[4] ॥५१॥
नमः सुरारिहन्त्रे च सोमसूर्य्याग्निचक्षुषे ।
नमो दिव्याय व्योमाय सर्व्वतन्त्रमयाय च ॥५२॥

---

(१) द्युति ।१।२।३।४।५।७
घृणि ।६।

(२) नवयोजनलक्षाणि ।१।२।३।४।
नवतिर्योजनानाञ्च

(३) घटीप्रमाणेन क्रममाण नमोस्तु ते ।१।२।३।४।५।
घटिकमात्रेण तावच्चलति भास्करः ।६।

(४) चास्तु सर्व्वदा ।१।२।३।४।
सर्व्वं सर्व्वगः ।५।
चास्तु सर्व्वगः ।६।

नमो वेदान्तवेद्याय सर्व्वकर्म्मादिसाक्षिणे ।
नमो हरितवर्णाय सुवर्णाय नमो नमः ॥ ५३ ॥
अरुणो माघमासे तु सूर्य्यो वै फाल्गुने तथा ।
चैत्रमासे तु वेदाङ्गो भानुर्वैशाखतापनः[1] ॥ ५४ ॥
ज्यैष्ठमासे तपेदिन्द्र आषाढे तपते रविः ।
गभस्तिः श्रावणे मासि यमो भाद्रपदे तथा ॥५५
इषे सुवर्णरेताश्च कार्त्तिके च दिवाकरः ।
मार्गशीर्षे तपेन्मित्रः पौषे विष्णुः सनातनः ॥५६॥
पुरुषस्त्वधिके मासे मासाधिक्ये तु कल्पयेत् ।
इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्त्तिता ॥५७
उग्ररूपा महात्मानस्तपन्ते विश्व[2]रूपिणः ।
धर्मार्थकाममोक्षाणां प्रस्फुटा हेतवो नृप ! ॥५८॥
सर्वपापहरञ्चैवमादित्यं संप्रपूजयेत् ।
एकधा दशधा चैव शतधा च सहस्रधा ॥ ५९ ॥

---

(१) भानुर्वैशाखतापनः ।१।२।३।४।७।
वैशाखे तापनः स्तृतः ।५।
वैशाखे तपनः स्मृतः ।६।

(२) क्विश्व ।१।२।४।५।
विष्णु ।३।६।

तपन्ते विश्वरूपेण संहरन्ति सृजन्ति च[1] ।
एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः ॥६०॥
महेन्द्रश्चैव कालश्च यमो वरुण एव च ।
नक्षत्रग्रहताराणामधिपो विश्वतापनः ॥ ६१ ॥
वायुरग्निर्धनाध्यक्षो भूतकर्त्ता स्वयं प्रभुः ।
एष देवो हि देवानां सर्वमाप्यायते जगत्[2] ॥६२॥
एष कर्त्ता हि भूतानां संहर्त्ता रक्षकस्तथा ।
एष लोकानुलोकाश्च सप्तद्वीपाश्च सागराः[3] ॥६३॥
एष पातालसप्तस्था दैत्यदानवराक्षसाः ।
एष धाता विधाता च बीजं क्षेत्रं प्रजापतिः[4] ॥६४

(१) संहरन्ति सृजन्ति च ।६।
सृजन्ति संहरन्ति च ।१।५।३।४।
(२) सर्वमाप्यायते जगत् ।१।२।३।४।७।
अनेनाप्यायते जगत् ।६।
अनेनाप्याय्यते जगत् ।५।
(३) सप्तद्वीपाश्च सागराः १।२।३।४।५।७।
सप्तद्वीपाः ससागराः ।६।
(४) प्रजापतिः ।१।२।३।४।७।
परा गतिः ।५।६।

एष एव प्रजा नित्यं सम्बर्धयति रश्मिभिः ।
एष यज्ञः स्वधा स्वाहा ह्रीः श्रीश्च पुरुषोत्तमः ॥६५
एष भूतात्मको[1] देवः सूक्ष्मोऽव्यक्तः सनातनः ।
ईश्वरः सर्व्वभूतानां परमेष्ठी प्रजापतिः ॥ ६६ ॥
कालात्मा सर्व्वभूतात्मा वेदात्मा[2] विश्वतोमुखः ।
जन्ममृत्युजराव्याधिसंसारभयनाशनः ॥ ६७ ॥
दारिद्र्यव्यसनध्वंसी श्रीमान् देवो दिवाकरः ।
विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्करो रविः ॥६८
लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः[3] ।
लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा ॥६९
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ।
गभस्तिहस्तो ब्रह्मण्यः सर्व्वदेवनमस्कृतः ॥ ७० ॥
आयुरारोग्यमैश्वर्य्यं नरा नार्य्यश्च मन्दिरे ।
यस्य प्रसादात्सन्तुष्टिरादित्यहृदयं जपेत् ॥ ७१ ॥

---

(१) भूतात्मको ।१।२।३।४।
सर्व्वात्मको ।५।
देवात्मको ।६।

(२) वेदात्मा ।१।२।३।५।६।७।
देवात्मा ।४।

(३) ग्रहेश्वरः ।२।३।४।५।
महेश्वरः ।१।

इत्येतैर्नामभिः पार्थ ! आदित्यं स्तौति नित्यशः ।
प्रातरुत्थाय कौन्तेय ! तस्य रोगभयं न हि[१] ॥७२
पातकान्मुच्यते पार्थ ! व्याधिभ्यश्च न संशयः ।
एकसन्ध्यं द्विसन्ध्यं वा सर्व्वपापैः प्रमुच्यते ॥७३॥
त्रिसन्ध्यं जपमानस्तु पश्येच्च परमं पदम् ।
यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते ॥ ७४ ॥
यद्रात्र्या कुरुते पापं तद्रात्र्या प्रतिमुच्यते ।
दद्रु-स्फोटक-कुष्ठानि मण्डलानि विचर्च्चिका[२] ॥७५
सर्व्वव्याधि-महारोग-भूतबाधास्तथैव च ।
डाकिनी शाकिनी चैव महारोगभयं कुतः ॥ ७६ ॥
ये चान्ये दुष्टरोगाश्च ज्वरातीसारकादयः ।
जपमानस्य नश्यन्ति जीवेच्च शरदां शतम् ॥७७॥
संवत्सरेण मरणं यदा तस्य ध्रुवं भवेत् ।
अशीर्षां पश्यतिच्छायामहोरात्रं धनञ्जय ! ॥७८॥

---

(१) न हि ।१।२।३।४।५
कुतः ।५।
(२) विचर्च्चिका ।६।
विसूचिका ।१।२।३।४।७।

यस्त्विदं पठते भक्त्या भानोर्वारे महात्मनः ।
प्रातःस्नाने कृते पार्थ ! एकाग्रकृतमानसः ॥ ७९ ॥
सुवर्णचक्षुर्भवति न चान्धस्तु प्रजायते ।
पुत्रवान् धनसम्पन्नो जायते चारुजः सुखी ॥८०॥
सर्व्वसिद्धिमवाप्नोति सर्व्वत्र विजयी भवेत् ।
आदित्यहृदयं पुण्यं सूर्य्यनामविभूषितम् ॥
श्रुत्वा च निखिलं पार्थ ! सर्व्वपापैः प्रमुच्यते ॥८१
अतःपरतरं नास्ति सिद्धिकामस्य पाण्डव !
एतज्जपस्व कौन्तेय ! येन श्रेयस्त्वमाप्स्यसि[1] ॥८२॥
आदित्यहृदयं नित्यं यः पठेत् सुसमाहितः ।
भ्रूणहा मुच्यते पापात् कृतघ्नो ब्रह्मघातकः ॥८३॥
गोघ्नः सुरापो दुर्भोजी दुष्प्रतिग्रहकारकः ।
पातकानि च सर्व्वाणि दहत्येव न संशयः ॥८४॥
य इदं शृणुयान्नित्यं जपेद्वापि समाहितः ।
सर्व्वपापविशुद्धात्मा सूर्य्यलोके महीयते ॥८५॥

---

(१) श्रेयस्त्वमाप्स्यसि ।५।६।
श्रेयो ह्यवाप्स्यसि ।१।२।३।४।७।

अपुत्रो लभते पुत्रान् निर्धनो धनमाप्नुयात् ।
कुरोगो मुच्यते रोगाद्भक्त्या यः प्रपठेत् सदा ॥८६॥
यस्त्वादित्यदिने पार्थ ! नाभिमात्रजले स्थितः ।
उदयाचलमारूढं भास्करं प्रणतः स्थितः ॥ ८७ ॥
जपते मानवो भक्त्या शृणुयाद्वापि भक्तितः ।
स याति परमं स्थानं यत्र देवो दिवाकरः ॥ ८८ ॥
अमित्रदमनं पार्थ ! यदा कर्त्तुं समारभेत् ।
तदा प्रतिकृतिं कृत्वा शत्रोश्चरणपांशुभिः ॥८९॥
आक्रम्य वामपादेन आदित्यहृदयं जपेत् ।
एतन्मन्त्रं समाहूय सर्व्वसिद्धिकरं परम् ॥ ९० ॥
ॐ ह्रीं हिमालीढं स्वाहा । ॐ ह्रीं निलीढं स्वाहा ।
ॐ ह्रीं मालीढं स्वाहा[1] इति मन्त्रः ॥

---

(१) ॐ ह्रीं हिमालीढं स्वाहा । ॐ ह्रीं निलीढं स्वाहा । ॐ ह्रीं मालीढं स्वाहा ।१।२।४।

ॐ ह्रीं हिमालीढं स्वाहा । ॐ ह्रीं निलीढं स्वाहा । ॐ ह्रीं मालीढं स्वाहा ।३।

ॐ ह्रीं हिमालीढमालीढं स्वाहा । ॐ ह्रीं मालीढ स्वाहा । ॐ ह्रीं मालीड़ स्वाहा ।६।

ॐ ह्रीं मालीढं स्वाहा ।७।

त्रिभिश्च रोगी भवति ज्वरो भवति पञ्चभिः ।
जपैस्तु सप्तभिः पार्थ ! राक्षसीं तनुमाविशेत् ॥६१॥
राक्षसेनाभिभूतस्य विकारान् शृणु पाण्डव !
गायते[1] नृत्यते नग्न आस्फोटयति धावति ॥६२॥
शिवारुतश्च कुरुते हसते क्रन्दते पुनः ।
एवं संपीड्यते पार्थ ! यद्यपि स्यान्महेश्वरः ॥६३॥
किं पुनर्मानुषः कश्चिच्छौचाचारविवर्जितः ।
पीड़ितस्य न सन्देहो ज्वरो भवति दारुणः ॥६४॥
यदा चानुग्रहं तस्य कर्त्तुमिच्छेच्छुभङ्करम् ।
तदा सलिलमादाय जपेन्मन्त्रमिमं बुधः ॥ ६५ ॥
नमो भगवते तुभ्यमादित्याय नमो नमः ।
जयाय जयभद्राय हरिदश्वाय ते नमः ॥ ६६ ॥
(ॐ दिव्याय दिव्यरूपाय ग्रहाणां पतये नमः )[2] ॥

---

( १ ) गीयते ।१।२।३।४।७।

गायते ।५।६।

( २ ) ।१।२।३।४।७।। पुस्तकेषु नास्ति

स्नापयेत्तेन मन्त्रेण[१] शुभं भवति नान्यथा ।
अन्यथा चेद्[२] भवेद्दोषो नश्यते नात्र संशयः ॥९७

अथ पूजाप्रकारः ।

स्तोत्रं ते निखिलं प्रोक्तं[३] पूजाञ्चैव निबोध मे ।
उपलिप्ते शुचौ देशे नियतो वाग्यतः शुचिः ॥ ९८
वृत्तं वा चतुरस्रं वा लिप्तभूमौ लिखेच्छुचिः[४] ।
त्रिधा तत्र लिखेत् पद्ममष्टपत्रं सकर्णिकम् ॥ ९९॥
अष्टपत्रं लिखेत् पद्मं लिप्तगोमयमण्डले ।
पूर्वपत्रे लिखेत् सूर्यमाग्नेय्यान्तु रविं न्यसेत् ॥१००
याम्याञ्चैव[५] विवस्वन्तं नैरृत्यान्तु भगं न्यसेत् ।
प्रतीच्यां वरुणं विद्याद् वायव्यां मित्रमेव च ॥१०१

---

(१) मन्त्रेण ।१।२।३।४।५।७।
तोयेन ।६।

(२) चेत् ।५।
च ।१।२।३।४।७।

(३) अतस्ते निखिलः प्रोक्तः ।१।२।३।४।
स्तोत्रं ते निखिलं प्रोक्तं ।५।६।

(४) लिप्तभूमौ लिखेच्छुचिः ।१।२।३।४।७।
मण्डलं गोमयेन तु ।५।६।

(५) याम्यायाञ्च ।१।२।४।७।
याम्याञ्चैव ।३।५।६।

आदित्यमुत्तरे पत्रे ऐशान्यां[1] विष्णुमेव ।
मध्ये तु भास्करं विद्यात् क्रमेणैव तमर्च्चयेत् ॥१०२
अतः परतरं नास्ति सिद्धिकामस्य पाण्डव !
महातेजसमुद्यन्तं प्रणमेत् तं कृताञ्जलिः[2] ॥ १०३
सकेसराणि पद्मानि करवीराणि चार्जुन !
तिलतण्डुलयुक्तानि[3] कुशगन्धोदकानि च[4] ॥१०४
रक्तचन्दनमिश्राणि कृत्वा वै ताम्रभाजने ।
धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं स्पृशेत् ।१०५
मन्त्रपूतं गुडाकेश ! चार्घ्यं दद्याद् गभस्तये ।
सायुधं सरथञ्चैव सूर्य्यमावाहयाम्यहम् ॥१०६॥
स्वागतो भव। सुप्रतिष्ठितो भव। सन्निधो भव ।
सन्निहितो भव। सम्मुखो भव। इति पञ्च मुद्राः ।

---

(१) ईशान्यां ।१।२।३।४।७।
ऐशान्यां ।४।५।६।

(२) स कृताञ्जलिः ।२।३।७।
सत्कृताञ्जलिः ।१।
तं कृताञ्जलिः ।४।
च कृताञ्जलिः ।६।

(३) युक्तानि ।२।४।
संयुक्तं ।१।३।
मंयुक्त ।५।६।

(४) कुशगन्धोदकेन च ।१।२।३।
कुशगन्धोदकानि च ।४।५।६।

स्फुटयित्वार्हयेत् सूर्य्यं भुक्तिं मुक्तिं लभेन्नरः ॥

अथ मन्त्राः ।

ॐ श्रीं विद्या किलि किलि कट कटेष्ट[१] सर्वार्थसाधनाय स्वाहा ॥

ॐ श्रीं ह्रां ह्रीं सः[२] सूर्य्याय नमः स्वाहा ॥

ॐ श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः[३] सूर्य्यमूर्त्तये स्वाहा ॥

ॐ श्रीं ह्रीं खखोल्काय[४] सर्वमूर्त्तये स्वाहा ॥

ॐ ह्रूं मार्त्तण्डाय स्वाहा ॥ १०७ ॥

---

(१) कट कटेष्ट ।१।७।
कटकेष्ट ।२।३।४।

(२) ॐ श्रीं ह्रीं सः ।१।
ॐ श्रीं ह्रीं ह्रूं हंसः ।४।७।
ॐ श्रीं ह्रीं हः हंसः ।२।३।

(३) ॐ श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ।१।२।३।७।
ॐ श्रीं ह्रां ह्रीं ह्रूं ह्रः ।४।

(४) ॐ श्रीं ह्रीं खखोल्काय ।१।७।
ॐ श्रीं ह्रीं खं ख लोकाय ।२।३।४।
ॐ ह्रं खं लोकाय ।६।

नमोऽस्तु सूर्य्याय सहस्रभानवे
नमोऽस्तु वैश्वानरजातवेदसे ।
त्वमेव चार्घ्यं प्रतिगृह्ण[1] देव !
देवाधिदेवाय नमो नमस्ते ॥१०८॥
नमो भगवते तुभ्यं नमस्ते[2] जातवेदसे ।
दत्तमर्घ्यं मया भानो ! त्वं गृहाण नमोऽस्तु ते ॥१०९
( दिशि दिशि तपनं महोग्रतापं
ज्वलितहुताशनदीप्ततेजसम् ।
तिथिकरणकालमुहूर्त्तचक्रं
दिवसकरं शरणमुपैमि सूर्य्यम्[3] ॥ )
एहि सूर्य्य ! सहस्रांशो ! तेजोराशे जगत्पते !
अनुकम्पय मां देव ! गृहाणार्घ्यं दिवाकर[4] ॥११०

---

( १ ) प्रतिगृह्ण ।१।२।३।४।५।६।७। प्रगृहाण ( २ ) नमस्ते ।१।२।३।४।७। वृहते ।६।
( ३ ) ।६। पुस्तकं विना नान्यत्रैतदस्तीति प्रक्षिप्तमेवेति मन्यामहे
( ४ ) दिवाकर ।६।
नमोऽस्तु ते ।१।२।३।

नमोभगवते तुभ्यं नमस्ते जातवेदसे ।
ममेदमर्घ्यं गृह्ण त्वं देवदेव ! नमोऽस्तु ते ॥ १११
सर्वदेवाधिदेवाय आधिव्याधिविनाशिने ।
इदं गृहाण मे देव ! सर्वव्याधिर्विनश्यतु ॥११२॥
नमः सूर्य्याय शान्ताय सर्वरोगविनाशिने ।
ममेप्सितं फलं दत्वा प्रसीद परमेश्वर ! ॥११३॥
ॐ नमो भगवते सूर्य्याय स्वाहा ।
ॐ शिवाय स्वाहा ।
ॐ सर्वात्मने सूर्य्याय नमः स्वाहा ।
ॐ अक्षय्यतेजसे नमः स्वाहा ।
सर्वसङ्कटदारिद्र्यं शत्रून् नाशय नाशय ।
सर्वलोकेषु विश्वात्मन् !
सर्वात्मन् ! सर्वदर्शक[१] ! ॥ ११४ ॥
नमो भगवते सूर्य्य ! कुष्ठरोगान् विखण्डय ।
आयुरारोग्यमैश्वर्य्यं देहि देव ! नमोऽस्तु ते ॥११५

---

( १ ) विश्वात्मन् ! सर्वात्मन् ! सर्वदर्शक ! ।३।४।
यिश्वात्मा सर्वात्मा सर्वदर्शकः ।१।२।
विश्वात्मन् ! सर्वज्ञ ! सर्वदर्शक ! ।७।

नमो भगवते तुभ्यमादित्याय नमो नमः।

ॐ अक्षय्यतेजसे नमः। ॐ सूर्य्याय नमः।

ॐ विश्वमूर्त्तये नमः।

आदित्यश्च शिवं विद्याच्छिवमादित्यरूपिणम्।

उभयोरन्तरं नास्ति आदित्यस्य शिवस्य च ॥११६॥

एतदिच्छाम्यहं श्रोतुं पुरुषो वै दिवाकरः।

उदये ब्रह्मणो रूपं मध्याह्ने तु महेश्वरः ॥११७॥

अस्तमाने[1] स्वयं विष्णुस्त्रिमूर्त्तिश्च[2] दिवाकरः।

नमो भगवते तुभ्यं विष्णवे प्रभविष्णवे ॥११८॥

ममेदमर्घ्यं प्रतिगृह्ण देव !

देवाधिदेवाय नमो नमस्ते।

श्रीसूर्य्याय साङ्गाय सपरिवाराय, श्रीसूर्य्य-

नारायणायेदमर्घ्यं[3] समर्पयामि ॥११९॥

इति यन्त्रे ताम्रपात्रे वार्घ्यं समर्पयेत्।

---

(१) अस्तमाने ।१।२।३।४। (२) त्रिमूर्त्तिश्च ।१।२।३।४।

अस्तमणे ।७। स्त्रयीमूर्त्ति ।६।

अस्तमानः ।६।

(३) श्रीसूर्य्यनारायण ! साङ्गकाय, इदं सहार्घ्यं परिवारवर्गैः।

हिमघ्नाय तमोघ्नाय रक्षोघ्नाय च ते नमः ।
कृतघ्नघ्नाय[1] सत्याय तस्मै सूर्य्यात्मने नमः ॥१२०
जयोऽजयश्च विजयो जितप्राणो जितश्रमः ।
मनोजवो जितक्रोधो वाजिनः सप्त कीर्त्तिताः ॥१२१

हरितहयरथं दिवाकरं
कनकमयाम्बुजरेणुपिञ्जरम् ।
प्रतिदिनमुदये नवं नवं
शरणमुपैमि हिरण्यरेतसम् ॥१२२॥

न तं व्यालाः प्रबाधन्ते न व्याधिभ्यो भयं भवेत् ।
न नागेभ्यो भयञ्चैव न च भूतभयं क्वचित् ॥१२३
अग्निशत्रुभयं नास्ति पार्थिवेभ्यस्तथैव च ।
दुर्गतिं तरते घोरां पुत्रांश्च[2] लभते पशून्[3] ॥१२४॥

---

(१) कृतघ्नघ्नाय ।२।३।४।७।
कृताघघ्नाय ।५।
कृतघ्नाय च ।१।६।

(२) पुत्रांश्च ।५।६।
प्रजांश्च ।१।२।३।४।७।

(३) पशून् ।१।२।३।४।६।७।
बहून् ।५।

सिद्धिकामो लभेत् (?) सिद्धिं
कन्याकामस्तु कन्यकाम् ।
एतत् पठेत् स कौन्तेय !
भक्तियुक्तेन चेतसा ॥ १२५ ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
कन्याकोटिसहस्रस्य दत्तस्य फलमाप्नुयात् ॥ १२६
इदमादित्यहृदयं योऽधीते सततं नरः ।
सर्व्वपापविशुद्धात्मा सूर्य्यलोके महीयते ॥ १२७ ॥
नास्त्यादित्यसमो देवो नास्त्यादित्यसमा गतिः ।
प्रत्यक्षो भगवान् विष्णुर्येन विश्वं प्रतिष्ठितम् ॥ १२८
नवतिर्योजनं लक्षं[1] सहस्राणि शतानि च ।
यावद् घटीप्रमाणेन तावच्चरति भास्करः ॥ १२९ ॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत् फलं ।
तत् फलं लभते विद्वान्
शान्तात्मा स्तौति यो रविम् ॥ १३०

---

( १ ) नवतिर्योजनं लक्षं ।१।२।४।
नवयोजनलक्षाणि ।३।
नवतिं योजनानाञ्च ।७।

योऽधीते सूर्य्यहृदयं सकलं सफलं भवेत् ।
अष्टानां ब्राह्मणानाञ्च लेखयित्वा समर्पयेत् ॥१३१
ब्रह्मलोके ऋषीनाञ्च जायते मानुषोऽपि वा ।
जातिस्मरत्वमाप्नोति शुद्धात्मा नात्र संशयः ॥१३२

अजाय लोकत्रयपावनाय
भूतात्मने गोपतये वृषाय ।
सूर्य्याय सर्व्वप्रलयान्तकाय
नमो महाकारुणिकोत्तमाय ॥१३३
विवस्वते ज्ञानभृदन्तरात्मने
जगत्प्रदीपाय जगद्धितैषिणे ।
स्वयम्भुवे दीप्तसहस्रचक्षुषे
सुरोत्तमायामिततेजसे नमः ॥१३४॥
सुरैरनेकैः परिषेविताय
हिरण्यगर्भाय हिरण्मयाय ।
महात्मने मोक्षपदाय[1] नित्यं
नमोऽस्तु ते वासरकारणाय ॥१३५

(१) पदाय ।१।२।४।
प्रदाय ।३।६।७।

आदित्यश्चार्चितो देव
आदित्यः परमं पदम् ।
आदित्यो मातृको भूत्वा
आदित्यो वाङ्मयं जगत् ॥१३६॥
आदित्यं पश्यते भक्त्या
मां पश्यति ध्रुवं नरः ।
नादित्यं पश्यते भक्त्या
न स पश्यति मां नरः ॥ १३७ ॥
त्रिगुणश्च त्रितत्त्वश्च
त्रयो[१] देवास्त्रयोऽग्नयः ।
त्रयाणाञ्च त्रिमूर्त्तिस्त्वं
तुरीयस्त्वं नमोऽस्तु ते ॥१३८॥
नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूति-स्थिति-नाश-हेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चि-नारायण-शङ्करात्मने ॥१३९॥

---

(१) त्रयो ।२।३।४।
त्रयी ।१।

यस्योदयेनेह जगत्प्रबुध्यते
प्रवर्त्तते चाखिलकर्म्मसिद्धये ।
ब्रह्मेन्द्रनारायणरुद्रवन्दितः
स नः सदा यच्छतु मङ्गलं रविः ॥१४०

नमोऽस्तु सूर्य्याय सहस्ररश्मये
सहस्रशाखान्वितसम्भवात्मने ।
सहस्रयोगोद्भवभागभागिने
सहस्रसंख्यायुगधारिणे नमः ॥१४१॥

यन्मण्डलं दीप्तिकरं विशालं
रत्नप्रभं तीव्रमनादिरूपम् ।
दारिद्र्यदुःखक्षयकारणञ्च
पुनातु मां तत्सवितुर्वरेण्यम् ॥१४२

यन्मण्डलं देवगणैः सुपूजितं
विप्रैः स्तुतं भावन[1] मुक्तिकोविदम्[2] ।

---

(१) भावन ।२।३।४।७
मानव ।१।
भा वि ।६।

(२) यन्मण्डलं देवगणस्य पूज्यं
विप्रैः स्तुतं भावविमुक्तिदक्षम् ।
इति पाठ एव सुष्ठुतया प्रतिभाति,
अन्यथा छन्दोव्यत्ययः ।

तं देवदेवं प्रणमामि सूर्यं
पुनातु मां तत्सवितुर्वरेण्यम् ॥१४३॥
यन्मण्डलं ज्ञानघनं त्वगम्यं[1]
त्रैलोक्यपूज्यं त्रिगुणात्मरूपम् ।
समस्ततेजोमयदिव्य[2]रूपं
पुनातु मां तत् सवितुर्वरेण्यम् ॥१४४॥
यन्मण्डलं गूढ़[3]मतिप्रबोधं
धर्मस्य वृद्धिं कुरुते जनानाम् ।
यत् सर्व्वपापक्षयकारणञ्च
पुनातु मां तत् सवितुर्वरेण्यम् ॥१४५॥
यन्मण्डलं व्याधिविनाशदक्षं
यदृग्यजुःसामसु सम्प्रगीतम् ।
प्रकाशितं येन च भूर्भूव स्वः
पुनातु मां तत् सवितुर्वरेण्यम् ॥१४६॥

---

(१) त्वगम्यं ।१।२।३।४।७। च गम्यं ।६।
(२) दिव्य ।१।२।३।४। वीज ।६।
(३) गूढ़ ।१।२।३। मूढ़ ।६।

यन्मण्डलं वेदविदो वदन्ति
गायन्ति यच्चारणसिद्धसङ्घाः[१] ।
यद्योगिनो योगरताः स्मरन्ति[२]
पुनातु मां तत् सवितुर्वरेण्यम् ॥१४७॥

यन्मण्डलं सर्व्वजनस्य पूज्यं[३]
ज्योतिश्च कुर्यादिह मर्त्त्यलोके ।
यत्कालकालादिमनादिरूपम्[४]
पुनातु मां तत् सवितुर्वरेण्यम् ॥१४८॥

यन्मण्डलं विष्णुचतुर्म्मुखाख्यं
यदक्षरं पापहरं जनानाम् ।

---

(१) गायन्ति यच्चारणसिद्धसङ्घाः ।१।२।३।४।७।
अमर्त्त्य मर्त्त्यासुर सिद्धयक्षाः ।६।
(२) योगजुषाञ्च सङ्घाः ।१।२।३।४।७।
योगरता स्मरन्ति ।६।
(३) जनस्य पूज्यं ।१।२।३।४।
जनेषु पूजितं ।६।
(४) कालादिमनादिरूपं ।१।२।३।४।७।
कालाद्यणिमादिरूपं ।६।

यत्कालकल्पक्षयकारणञ्च
पुनातु मां तत् सवितुर्वरेण्यम्[१] ॥१४९॥
यन्मण्डलं विश्वसृजां प्रसिद्ध-
मुत्पत्तिरक्षाप्रलयप्रगल्भम् ।
यस्मिन् जगत् संहरतेऽखिलञ्च
पुनातु मां तत् सवितुर्वरेण्यम् ॥१५०॥
यन्मण्डलं सर्व्वगतस्य विष्णो-
रात्मा परं धाम विशुद्धतत्त्वम् ।
सूक्ष्मान्तरैर्योगपथानुगम्यं
पुनातु मां तत् सवितुर्वरेण्यम् ॥१५१॥
* ( यन्मण्डलं ब्रह्मविदो वदन्ति
गायन्ति यच्चारणसिद्धसंङ्घाः ।
यन्मण्डलं वेदविदः स्मरन्ति
पुनातु मां तत् सवितुर्वरेण्यम् ॥१५२॥

---

(१) अत्र मण्डलाष्टकं समाप्यते। अनन्तरस्थिताः श्लोकाः प्रक्षिप्ताः।

* एतमारभ्य श्लोकत्रयी पुनरुक्ततया नातिरम्यतया च वहुषु पुस्तकेषु न दृश्यते । मण्डलश्लोकानाममष्टतया प्रक्षिप्ता एत इत्यत्र नास्ति शङ्कापङ्कलेशोऽपि ।

यन्मण्डलं प्राग्युदितं स्मरन्ति
सुरासुरा विप्रगणा मुनीन्द्राः ।
यदश्वमेधादिमखैर्यजन्ति
पुनातु मां तत् सवितुर्वरेण्यम् ॥१५३॥

यन्मण्डलं वेदविदोपगीतं
यद्योगिनां योगपथानुगम्यम् ।
तत् सर्ववेदं प्रणमामि सूर्यं
पुनातु मां तत् सवितुर्वरेण्यम् ॥१५४॥

मण्डलाष्टमिदं पुण्यं यः पठेत् सततं नरः ।
सर्व्वपापविशुद्धात्मा सूर्य्यलोके महीयते ॥१५५॥

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥१५६॥

सशङ्खचक्रं रविमण्डले स्थितं
कुशेशयाक्रान्तमनन्तमच्युतम् ।
भजामि बुद्ध्या तपनीयमूर्त्तिं
सुरोत्तमं चित्रविभूषणोज्ज्वलम् ॥ १५७

(एतत्तु यः पठति केवलमेव मुक्तो
नारायणस्य चरणावभिवन्द्य वन्द्यौ ।
पाठेन तेन परमेण सनातनस्य
स्थानं जरामरणवर्ज्जितमेति विष्णोः[1] ॥१५८)
एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
कीर्त्तयन्ति सुरश्रेष्ठं देवं नारायणं विभुम्[2] ॥१५९
वेदवेदाङ्गशारीरं दिव्यदीप्तिकरं परम् ।
रक्षोघ्नं रक्तवर्णञ्च सृष्टिसंहारकारणम् ॥ १६० ॥
(अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात् करुणभावेन रक्ष रक्ष दिवाकर ![3] ॥१६१)
एकचक्रो रथो यस्य दिव्यः कनकभूषितः ।
स मे भवतु सुप्रीतो पद्महस्तो दिवाकरः ॥१६२॥

---

(१) श्लोकोऽयं ।१।२।३।४।७। पुस्तकेषु नास्ति, केवलं ।६। पुस्तके दृश्यते । प्रक्षिप्तोऽयमित्यस्माकं मतिः ।

(२) विभुम् ।१।२।३।४।७।
रविम् ।६।

(३) एतत् ।१।२।३।४।७। पुस्तकेषु नास्ति ।

आदित्यः प्रथमं नाम द्वितीयन्तु दिवाकरः ।
तृतीयं भास्करः प्रोक्तं चतुर्थन्तु प्रभाकरः ॥१६३
पञ्चमन्तु सहस्रांशुः षष्ठञ्चैव त्रिलोचनः ।
सप्तमं हरिदश्वश्च अष्टमन्तु विभावसुः ॥ १६४ ॥
नवमं दिनकृत् प्रोक्तं दशमं द्वादशात्मकः ।
एकादशं त्रयीमूर्त्तिर्द्वादशं सूर्य्य एव च ॥ १६५॥
द्वादशादित्यनामानि प्रातःकाले पठेन्नरः ।
दुःस्वप्ननाशनञ्चैव सर्वदुःखञ्च नश्यति ॥ १६६ ॥
दद्रुकुष्ठहरञ्चैव दारिद्र्यं हरते ध्रुवम् ।
सर्वतीर्थप्रदञ्चैव सर्वकामप्रवर्धनम् ॥ १६७ ॥
यः पठेत् प्रातरुत्थाय भक्त्या नित्यमिदं नरः ।
सौख्यमायुस्तथारोग्यं लभते मोक्षमेव च ॥ १६८
अग्निमीले नमस्तुभ्यमिषे त्वोर्जे स्वरूपिणे ।
अग्न आयाहि वीतस्त्वं नमस्ते ज्योतिषाम्पते ॥१६९
शन्नो देवी नमस्तुभ्यं जगच्चक्षुर्नमोस्तु ते ।
पञ्चमायोपवेदाय भास्कराय नमो नमः ॥ १७०॥
(नमो धर्मविधात्रे च नमस्ते विश्वरूपिणे ।

नमस्त्रिलोकदेवाय भास्कराय नमो नमः[१] ॥ )
पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वरथसंयुक्तो द्विजराज ! नमो[२] रविः ॥१७१
आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने ।
जन्मान्तरसहस्रेषु न ते दारिद्र्यमाप्नुयुः[३] ॥१७२॥
उदयगिरिमुपेतं भास्करं पद्महस्तं
निखिलभुवननेत्रं रक्त[४]रत्नोपमेयम् ।
तिमिरकरिमृगेन्द्रं बोधकं पद्मिनीनां
सुरवरमभिवन्दे सुन्दरं विश्ववन्द्यम्[५] ॥ १७३ ॥

---

(१) एतत् केवलं ।६। पुस्तके विद्यते ।

(२) द्विजराज ! नमो ।१।
द्विभुजः स्यात् सदा ।२।३।४।
द्विभुजः पातु मां ।५।

(३) न ते दारिद्र्यमाप्नुयुः ।६।
दारिद्र्यं नोपजायते ।१।२।३।
दैन्यं तेषां न जायते ।४।

(४) रक्त ।१।६।
रत्न ।२।३।४।

(५) वन्द्यम् ।१।२।३।४।
दीपम् ।६।

सुकृतं दुष्कृतं वापि सर्वं पश्यसि सर्वदा ।
सर्वदेव ! नमस्तेऽस्तु प्रसीद मम भास्कर ![१] ॥१७३॥

इति भविष्योत्तरपुराणे कृष्णार्जुनसंवादे
आदित्यहृदयं सम्पूर्णम् ।
श्रीसविता(२) सूर्य्यनारायणायार्पणमस्तु ।

---

(१) एतत् ।५। व्यतिरिक्ते नान्यत्र लभ्यते ।
(२) सविता ।१।
सवितुः ।२।

ॐ श्रीश्रीशारदाम्बाचन्द्रमौलीश्वरौ विजयेतेतराम् ।

श्रीश्रीसूर्य्यनारायणाय नमः ।

अथ

# आदित्यदीपनी टीका ।



गङ्गासंगमभागङ्गावरणाय त्वरान्वितः ।
रोमाञ्चेनाञ्चितः पायादगङ्गां गत ईश्वरः ॥ १ ॥

ध्वान्तध्वंसी वेदविद्यादिशंसी
साक्षी दक्षः सर्वतो व्यापृताक्षः ।
रोगं शोकं ज्योतिषां ज्योतिरेकं
हन्याज्जिष्णुः श्रीमदादित्यविष्णुः ॥ २ ॥

सितशतदलवासां चन्द्रिकाचारुहासां
करविनिहितवीणा-नादपूर्णीकृताशाम् ।
अरुणितजपमाला-दत्तरक्ताभपाणिं
नतसुरमुकुटार्चिर्मालिनीं नौमि वाणीम् ॥ ३ ॥

वाणीं प्रणम्य त्रिपुराभिधाना-
मादित्यपूर्वं हृदयं तदेतत् ।
देवीप्रसादाद्विमलं विधातुं
देवीप्रसादो यतते यतात्मा ॥ ४ ॥

आदित्यहृदयं स्तोत्रं कालाद्भ्रमतमोवृतम् ।
आदित्यदीपनी टीका तदद्योद्द्योतयिष्यति ॥ ५ ॥

क्वादित्यस्य स्तवनमतुलं मन्त्रयन्त्रादिगूढं
शास्त्राज्ञानादुपहतगतिः क्वातिमूढा मतिर्मे ।
तस्मात् सन्तो ! यदि गुणकणः क्वापि तस्मिन् रमध्वं
चेष्टा मोघा वरमिह पुनर्नालसा स्तब्धवृत्तिः ॥ ६ ॥

शतानीकश्चन्द्रवंशावतंसः पाण्डुपुत्राणामधस्तनश्चतुर्थः पुरुषः सुमन्तुं व्यासशिष्यं जैमिनिसुतमाह। कथं केन प्रकारेण । आदित्यं भगवन्तं सूर्य्यमादिदेवम् । उद्यन्तमुदयपर्वतारूढं प्रातःकालीनम् । उपतिष्ठे पुजययेयम् । 'उपाद्देवपूजे'ति वार्त्तिकेनात्मनेपदम् । उपतिष्ठेदिति प्रयोगस्तु दुर्घटः । अत्रोच्यते 'उपान्मन्त्रकरण' इति पाणिनिसूत्रम् । अत्र मन्त्रकरणाभावादात्मनेपदत्वं नाङ्गीकृतमिति वार्त्तिकमतमनादृत्य कथमपि स्थितेर्गतिश्चिन्तनीयेति समाधेयम् । यद्वा 'वा लिप्सायाम्' मिति वार्त्तिकेन विकल्पाश्रयणम् । तेनात्र पूजा नार्थः किन्तु लिप्सेति स्यात् ॥ १ ॥

सुमन्तुरेवं पृष्टः सन्नेवाह । 'नापृष्टः कस्यचिद्ब्रूया' दिति स्मरणात् । इदमादित्योपस्थानम् । महात्मना महाभागेनार्जुनेन शिरसा प्रणम्य प्रणतिपुरःसरं शङ्खचक्रगदाधरो भगवान् कृष्णः । पुरा प्राचीने काले । पृष्टो जिज्ञासितः ॥ २ ॥

कुरुक्षेत्रे भारते रणे भरतवंशीयानां कौरवपाण्डवानां प्रधने निवृत्ते निष्ठां गते । कृष्ण एव जगतां नाथः स्वामी तमिति कृष्णनाथम् । अब्रवीदुवाच ॥ ३ ॥

अर्जुनः किमवददित्याह। धर्मा अभ्युदयनिश्रेयसोत्पत्तिभूताश्चोदनालक्षणा शिष्यन्त एभिरिति तेषां धर्मशास्त्राणां वेद-वेदान्त-स्मृति-पुराण-पूजनपद्धतिप्रभृतीनाम्। 'शासनदनिशं देवि! वर्णाश्रमनिवासिनाम्। तारणात् सर्वपापेभ्यः शास्त्रमित्यभिधीयते' इति कुलार्णवे। ज्ञानं यथार्थो बोधः। गुह्यात् रहस्यात्, गुह्यतरं गोपनीयतरम्। 'धर्मस्य तत्वं निहितं गुहाया' मिति भावः। मया सर्व-वाङ्मयं शास्त्रमधीतमिति तु नैव गर्वोक्तिः किन्तु प्रकाममधीतवानस्मि तथापि शब्दाम्बुधेः पारं न दृष्टमिति विस्मयः॥ ४॥

सूर्यस्तुतिमयमादित्यस्तुत्यात्मकं न्यासं, देहावयवभेदेषु वर्णादिनिवेशनरूपम्। 'न्यायोपार्जित वित्तानामङ्गेषु विनिवेशनात्। सर्वरक्षाकराद्देवि! न्यास इत्यभिधीयते'। इति कुलार्णवे। वक्तुर्महसि योग्योऽसि। "मायाः श्रियाः धवः पतिस्तत्सम्बोधनमिति माधव। मधुविद्यावत्बोध्यत्वाद्वा। 'मौनात् ध्यानाच्च योगाच्च विद्धि भारत माधवम्' इति व्यासवचनाद्वा। यद्वा मा लक्ष्मीः धीः सरस्वती ते अवतीति माधव" इति शङ्करभगवत्पादाः। देवानां दीप्यमानानाममराणां वा ईशः प्रभुस्तत्सम्बोधनमिति देवेश। भक्त्या श्रद्धया। 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवये' ति स्वरसात्। प्रसादतोऽनुकम्पया॥ ५॥

सूर्ये भक्तिं परानुरक्तिं करिष्यामि। भक्तिं विना मुक्तिर्नास्तीति दर्शनात्। कथं केनोपायेन। प्रपूजये समर्चयेयमिति पूर्वेण सम्बन्धः॥ ६॥

श्रीभगवान् कृष्ण उवाच 'देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्। सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरये' दिति नियमात्। पृष्टेन जिज्ञासितेन ॥ ७ ॥

अस्माकमस्मदिति सम्बन्ध विवक्षया षष्ठी। एकं विषयान्तरव्यावृत्तं चित्तं मनो यस्यति एकचित्त एकाग्रः। 'मनसश्चेन्द्रियाणाञ्चाप्यैकाग्र्यं निश्चितं तप' इति भागवते। आदिर्मध्यमवसानश्च यत्रेति विग्रहे शेषाद्विभाषेति कप् ॥ ८ ॥

अर्जुनः पुनराह। सनातनं सदा विराजमानमव्ययमच्युतं नित्यमादित्यं कथमहमुपतिष्ठे ॥ ९ ॥

श्रीभगवांश्च प्रत्युवाच। पाण्डव पाण्डुतनय। पार्थ पृथासुत। महान्तौ बाहू यस्य तादृश। 'करिकरसदृशौ वृत्तावाजान्ववलम्बिनौ समौ पीनौ। बाहू पृथिवीशाना, मिति बृहत् संहितायाम्। यत् यस्मात्। विभायुक्ता कान्तिमन्तो वसवस्तेजांसि यस्य तस्येति विभावसोः। 'देवप्रभेदा वसवो वसुः किरणयोक्त्रयोः। वसु रत्नं वसु धनं वसु तेजो निगद्यते' इति शाश्वतः। 'वसुस्त्वग्नौ देवभेदे नृपे रुचि। योक्त्रे शुष्के वसु स्वर्णे रत्ने वृद्धयौषधौ धने।' इत्यनेकार्थसंग्रहे। उपस्थानमुपासनां पृच्छसीत्यन्वयः ॥ १० ॥

सर्वेषां मङ्गलानां प्रशस्तद्रव्याणां माङ्गल्यं माङ्गलिकं मङ्गलजनकमिति सर्वमङ्गलमाङ्गल्यम्। यद्वा सर्वेषु मङ्गलेषु मङ्गलमेवेति स्वार्थे ष्यञ्। 'मङ्गलानां च मङ्गल' मित्यर्थः। तथा च मत्स्यसूक्तमहातन्त्रे—'लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।

हिरण्यं सर्पिरादित्य' इति। जयवर्द्धनं युद्धे विजयप्रदायकम्। "यस्माद्धते न विजयन्ते जनास" इत्यर्थः। रामायणेऽपि 'येन सर्वानरीन् वत्स! समरे विजयिष्यसे' इत्याह भगवानगस्त्यः ॥ ११-१२ ॥

यत् आदियत्यहृदयं श्रुत्वा जनः स्वयमेव मुच्यते इति सामान्येनाभिधानम्। अर्जुनस्य पापनिर्देशाभावात् 'मुच्यसे' इति पाठो नास्मस्यं स्त्रदते ॥ परं श्रेष्ठं। नितरां श्रेयो मोक्षः तस्य करस्तम्, निःश्रयसकरम् ॥ १३ ॥

विहन्यतेऽनेनेति विघ्नोऽन्तरायः क प्रत्ययेन पुंलिङ्गोऽयं तेन विघ्ना अनेकरूपाश्चेति स्वीकृतः पाठः ॥ १४ ॥

तस्मात् पूर्वोक्तबहुविधश्रेयोदर्शनात्। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत ॰इत्यतः प्राक् प्रयोजनमादित्यहृदयेन प्रदर्शितम् ॥ १५ ॥

यस्यादित्यहृदयस्य जपादुच्चारणात् जन्तुर्जननशीलः प्राणी दारिद्रयात् दैन्यात् मुच्यते स्वयमेव। 'जन्मान्तरसहस्रेषु कृतपापप्रणाशनात्। परदेवप्रकाशाच्च जप इत्यभिधीयते' इति कुलार्णवे ॥ १६ ॥

अस्मिन् मन्त्रे मननात्मके साधनोद्देश्ये शब्दे। 'मननात् तत्वरूपस्य देवस्यामिततेजस'। त्रायते सर्वभयतस्तस्मान्मन्त्र इतीरितः।' इतिकुलार्णवे। ऋषति ज्ञानेन संसारपारं गच्छतीति ऋषिर्मन्त्रद्रष्टा। देवता मन्त्राधिष्टात्री। 'देहमास्थाय भक्तानां वरदानाच्च पार्वति। तापत्रयादिशमनाद्देवता परिकीर्त्तिता।'

इति कुलार्णवे। शक्तिः सामर्थ्यम् यद्वा मन्त्रस्यार्थरूपा शक्तिः ॥१७

सूर्य्यस्य आत्मा त्रिभुवनेश्वरो हरिर्देवता। यद्वा सूर्य्य एवात्मा त्रयाणां भुवनानामीश्वरः स्वामी स्वतन्त्रः प्रभुरित्यर्थः। 'तत् सूर्य्यस्य देवत्वं तन्महित्व' मिति मन्त्रवर्णात्। 'कर्मकरश्च प्रवृत्तमपरिसमाप्तमेव विसृजत्यस्तं यन्तं सूर्य्यं दृष्ट्वा। ईदृशं स्वातन्त्र्यं महिमा च सूर्य्यव्यतिरिक्तस्य कस्यास्ति। न कस्यापी' ति सायनभाष्ये। हरिताः नीलपीतमिश्रवर्णा हया अश्वा रथे यस्य तमिति हरितहयरथम्। तथाच ऋक्संहितायां—'भद्रा अश्वा हरितः सूर्य्यस्य।' यद्वा हरिता रसहरणशीला रश्मयः। जितो वैश्वानरो जातवेदाश्च येन तस्मायिति जितवैश्वानरजातवेदसे। द्वावेवेतौ वह्नेर्नाम्नी। 'अग्निर्वैश्वानरोवह्निर्वीतिहोत्रो धनञ्जयः। कृपीटयोनिर्ज्वलनोजातवेदास्तनूनपा'दित्यमरः। तस्मादत्र तु विशेषो वेदितव्यः। विश्वे नरे वर्त्तत इति वैश्वानरो भूस्थो वह्निः। जातमात्रं सागरजले क्षणं प्रकाशमात्रं वेदनीयो जातवेदा वडवानलः। एतौ जित्वा गगनमणिरान्यरीक्षो वह्निः सूर्य्यो विराजत इत्यर्थः। तथाहि न्यायशास्त्रेऽपि तेजस एवं प्रकारो भेदो दृश्यते—'उष्णस्पर्शवत्तेजः। पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके। विषयश्चतुर्विधः। भौमस्य दिव्योदर्य्याकरजभेदात्। भौमं वह्न्यादिकम्। अविन्धन' मित्याद्यन्नं भट्टः। कीलति वध्नात्यनेनेति कीलकः स्तम्भः। 'समौ शिवककीलका' वित्यमरः। अत्र तु मन्त्रभेदे व्यवहृतम्। 'सर्वमेतद्विजानीयान्मन्त्राणामपि कीलकमिति चण्डी। तस्य तु

कीलकत्वं तज्ज्ञानं विना मन्त्रसिद्धेरभावदर्शनादिति निष्कर्षः। कीलकमिति तु लक्षणया कीलकहरं विघ्नहरमित्यर्थे प्रयुक्तम्।

अथ ध्यानम्

भास्वन्ति दीप्यमानानि रत्नानि वज्रवैदुर्य्यमरकतादीनि तराढ्यो विशिष्टो मौलिश्चूडा किरीटं यस्येति भास्वद्रत्नाढ्यमौलिः। सूर्य्यस्य रत्नभूषणत्वं स्यमन्तकोपाख्याने मृग्यम्। स्फुरन्ती विच्छुरन्ती या अधरस्य रुक् द्युतिस्तयेति स्फुरदधररुचा। करावेव कमलौ ताभ्यां युतोऽन्वित इति करकमलयुतः। यद्वा करः किरणस्तद्द्वारेण कमलैः पद्मैर्युतो मिलितः, सूर्य्यस्य पद्मिनीनायकत्वात्। स्वर्णवर्णप्रभाभिरूपलक्षितः। योऽयं रविर्विश्वो निखिलोऽनन्तो य आकाशरूपोऽवकाशो महाशून्यं व्योम इति यावत् तत्र ये ग्रहाणां पतयः पृथिवीचन्द्रमङ्गलादयस्तेषां शिखरे प्रथम इति विश्वाकाशावकाशग्रहपतिशिखरे। तथा च उदयाद्रौ उदयाचले भाति स्वमहिम्ना वर्त्ततेतराम्। एतेन सूर्य्यस्य ग्रहराजत्वमुक्तम्। विश्वस्य जगतश्चक्षुः प्रकाशकमिति विश्वचक्षुः। चक्षुरिन्द्रियस्थानीयं वा। 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्ने' रिति मन्त्रवर्णात्। यद्वा विश्वानि बहूनि चक्षूंषि चक्षुरिन्द्रियवत् प्रकाशकानि तेजांसि यस्य। 'भानुर्हंसः सहस्रांशु' रित्यभिधानात्॥ १॥

अथ तन्त्रोक्तप्रकारेणादित्यस्य यन्त्रमुद्धरति। तन्त्रसारमते तु पीठन्यासोऽयं; तस्यैतन्मानं—'पीठे क्लृप्ते च प्रथमं दिक्षु मध्ये च संयजेत्। प्रभूतं विमलं सारं समाराध्यमतन्तरम्। पर-

मादिसुखं पीठं स्वविद्यान्तं प्रकल्पयेत्। ततः केशरमध्येषु, 'रां दीप्तायै नमः, रीं सुक्ष्मायै नमः, रूं जयायै, रें भद्रायै, रैं विभूत्यै, रों विमलायै, रौ अघोरायै, रं विद्युतायै, रः सर्वतोमुख्यै नमः।' पूजनयन्त्रमग्रे वक्ष्यति। मायाबीजं ह्रीं। तथाहि—'ह्रीं लज्जा गिरिजा च शक्तिरपि हृल्लेखा च माया परे'ति मन्त्राभिधाने। 'प्राणात्मकं हकाराख्यं बीजं तेन तदुद्भवाः। षडूर्मयः स्यू रेफोत्था गुणाश्चत्वार एव च।' 'रेफो मायाबीजमिति त्रिधा समभिधीयते' इति श्रीप्रपञ्चसारे॥ २—४॥

"सर्वश्चासौ ज्ञश्चेति सर्व्वज्ञस्तम्। 'इदं सर्वं यदयमात्मा' इति श्रुतेः।" ( वि० भा० ) सर्वत्र गच्छतीति सर्वगस्तम्। 'य इदं दीर्घं प्रयतं समस्थमेको विममे त्रिभिरित्पदेभिः' इति मन्त्रवर्णात्। सर्वेषां कारणभूतं हेतुभूतं दैवतमिति सर्वकारणदैवतम्। सर्वेषां हृदयं प्राणाधिष्ठानम्॥ ५॥

सर्वेषामात्मा जीवितमिति सर्वात्मा। 'सूर्य्य आत्मा जगतस्तस्थुषश्च' इति मन्त्रवर्णात्। सृष्टेर्जगतो जीवजातस्य जीवनस्य पालको रक्षकः इति सृष्टिजीवनपालकः। नात्र 'तृजकाभ्यां कर्त्तरी'ति समासविघातः शेषषष्ठ्या समासात्। 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति स्मृतेः॥ ६॥

सप्त हया वाजिनो यस्य तस्मायिति सप्तहयाय सप्तसप्तये। तेषां नामानि 'जपोऽजयश्चेत्यादिकं वक्ष्यत्यग्रे। एतेन सूर्य्यकिरणस्य नीलपीतहरितादिकशक्रचापवर्णेषु सप्तसु परिणमनं सिध्यतीति वैज्ञानिकं तत्वमपि प्रकारान्तरेणोक्तम्। अनन्तशक्ते अप्र-

मेयपराक्रम। मणिभूषणाय ते नमो नम इति पूर्वेण सम्बन्धः। 'अनन्तशक्तिर्मणिभूषणेने'ति कृते तु छन्दोहानिः स्यात्॥ ७॥

अथ न्यासविधिं प्रपञ्चयति। अर्च्यत इत्यर्कस्तमर्कम्। 'ब्रह्मादिभिः पूज्यमानैरर्चनीयत्वादर्कः' इति भारते। अवतीति रविस्तम्। सरतीति सूर्य्यस्तम्। दिवा प्रकाशमयो वासरस्तस्य कर इति दिवाकरस्तम्॥ ८॥

भातीति भानुस्तम्। भासां किरणानां कर उत्पादक इति भास्करस्तम्। पृष सेके तेन पर्षति वर्षतीति पर्जन्यस्तम्। 'आदित्याज्जायते वृष्टिरिति' स्मृतेः। तीक्ष्णं प्रखरम्। सूर्य्यस्यैतादृशं तेजो यत् संज्ञापि तत् सोढुं न शशाकेति पुराणे द्रष्टव्यं तेजःशातनोपाख्यानं सूर्य्यस्य॥ ९॥

तिग्मं प्रखरं तेजो यस्य तं तिग्मतेजसम्। पूष्णातीति पूषा तम्॥ १०॥

वरुणसूक्ते (१।२५) 'स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत्' इति मन्त्रवर्णात्। "स्वरश्मि संवरणात् सायंगत आदित्यो वरुणः।" 'तन्नोमित्रो वरुणोमामहन्ता' मिति सूर्य्यसूक्तोक्तात् वरुणं सूर्य्यम्। तक्षति तनूकरोति रसशोषणेनेति त्वष्टा तम्॥ ११॥

यमं रुद्रं च विनाशकत्वात्॥ १२॥

गवां किरणानां पतिमिति गोपतिम्। गौरुदके दृशि, स्वर्गे दिशि पशौ रश्मौ इति हेमः। गुल्फः पादग्रन्थिस्तयोः॥ १३॥

नास्ति भयं यस्मादित्यभयस्तम्॥ १४॥

अथ न्यासफलमाह। रिपूनां शत्रूणां संघट्टस्यान्योन्यविमर्दस्य कालेषु। अर्च पूजायामिति परस्मैपदीयस्तेन 'अर्चते' इति त्यक्तः पाठः ॥ १४—२४ ॥

अथ आदित्यस्य शताधिकनामान्याह। अत्र पञ्चविंशाधिकशतानि नामान्युक्तानि। तेषु वहुत्र पुनरुक्तिदर्शनादष्टोत्तरशतान्येव नामानि भवन्तीत्यस्माकं मतिः। तेषु—आदित्य (३) पूषा (३) सुवर्णः (३) रविः (२) महातेजाः (२) तपनः (२) प्रतापवान् (२) तेजोराशिः (२) शम्भुः (२) सौम्य (२) हव्यकव्यप्रदायक (२) अनादिः (२) आदिः (२) इति सङ्कलनम्। तेन पञ्चविंशाधिशतनामेभ्यः सप्तदशसंख्यकानि नामानि वहिर्यान्ति। आदित्योऽदितितनयः सूर्य्यमण्डलान्तःस्थो हिरण्मयः पुरुषः। विस्तरस्तूपोद्घाते द्रष्टव्यः। सूते जीवजातानीति सविता। 'सृष्ट्यर्थं भगवान् विष्णुः सविता स तु कीर्त्तितः।' 'सर्वलोकप्रसवनात् सविता स तु कीर्त्त्यते' इति वह्निपुराणे। 'दिवो धर्त्ता भुवनस्य प्रजापति' 'उर्व्यजीजनत् सविता सुम्नमुक्थ्यम्' इति मन्त्रवर्णात् (४।५३) 'उद्वेते प्रसवीता जनानां मिति च सवितृसूक्ते (७।६३)। सरति गच्छति सूर्य्यः। 'आकृष्टेन रजसा वर्त्तमानो हिरण्मयेन सविता रथेना देवो याति भुवनानि पश्यन्' इति मन्त्रवर्णात्। खमाकाशं गच्छतीति नवतिर्योजनं लक्षमिदित्यगमनमानन्तु वक्ष्यत्यग्रे, तेन खगत्वं सुपर्णत्वञ्च युज्येते। पुष्णाति लोकानन्नादिदानेनेति पूषा। गभस्तिः किरणोऽस्य विद्यत इति गभस्तिमान् ॥ २५ ॥

सुवर्णः स्वर्णम्। अयमाकरजो वह्निरिति न्यायशास्त्रे स्पष्टीकृतः। सूर्य्यस्यापि वह्निमयत्वादयमुपचारः। स्फटिकः श्वेतमणिविशेषः। मध्याह्नमार्त्तण्डस्य शुभ्रत्वादयमुपचर्य्यते। भातीति भानुः। 'तमेव भान्तमनुभाति सर्व'मिति श्रुतेः। स्फुर स्फुर्त्तौ क्तः स्फुरित ईषत्कम्पितः। विश्वं तापयति तेजसेति विश्वतापनः। यद्वा विश्वान् सर्वान् शत्रूनिति शेषः। अवति रक्षति पालयतीति वा रविः। इन् रुट् च। 'अचिरात्तु प्रकाशेन अवनात् स रविः स्मृतः।' इति मत्स्यपुराणे। "विश्वस्य जगतः कारणत्वेन विश्वमित्युच्यते ब्रह्म। 'ब्रह्मैवेदं विश्वमिदं वरिष्ठं' 'पुरुष एवेदं विश्वम्' इत्यादि श्रुतिभ्यः।" सूर्य्य एवेदं ब्रह्म। "तद्भिन्नं न किञ्चित् परमार्थतः सदस्ति। अथवा विशतीति विश्वं ब्रह्म। 'तत् सृष्ट्वा तदेवानुप्राविशत्।' इति श्रुति" रिति श्रीशङ्करभगवत्पादाः। महत् तेजो यस्येति महातेजाः प्रखरकिरणोऽयमादित्यो विष्णुश्चेति। वलं वलवतामस्मि तेजस्तेजस्विनामह' मिति भगवद्वचनम्। सुष्ठु प्रबोधयति जनान् निद्राया अज्ञानतमसो वेति सुप्रबोधकः॥ २६॥

हिरण्यं हिरण्मयः पुरुषो गर्भे यस्येति हिरण्यगर्भः। 'ध्येयः सदा सवितृमण्डलमध्यवर्त्ती'त्यग्रे वक्ष्यमानत्वात्। यद्वा आदिदेवः 'हिरण्यगर्भः समवर्त्तताग्रे' इति मन्त्रवर्णात्। त्रीणि शिरांस्यस्येति त्रिशिराः। प्रातर्मध्याह्ने सायञ्च त्रिधा रूपभेदादयमुपचारः। तपति महीं तेजसेति तपनः। भासां तेजसां करो भास्करः। आदितिगर्भाण्डं मुमोच, 'ततस्तां कश्यपः प्राह

किञ्चित् कोपप्लुताक्षरम्। किं मारयसि गर्भाण्डमिति नित्योपवासिनीम्।' 'मारितश्च यतः प्रोक्तमेतदण्डं त्वयादितेः। तस्मान्मुने! सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति।' इति मार्कण्डेयपुराणे। यद्वा 'अण्डमध्यगतः सूर्य्यो द्यावाभूम्योर्यदन्तरम्। सूर्य्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः। मृतोऽण्ड एष एतस्मिन् जातो मार्त्तण्डशब्दभाक्।' इति श्रीमद् देवीभागवतोक्तत्वात् द्यावाभूम्योरन्तरस्थे चेतनारहिते अण्डे वैराजरूपेण प्रवेशाद् मार्त्तण्डः। गवां किरणानां पतिरिति गोपतिः। श्रीरैश्वर्य्यलक्षणा समग्रा यस्येति श्रीमान्। यद्वा कान्तिमान्। कृतं जीवजातैः पुण्यापुण्यजनकं यत् कर्म क्रियते तज्जानातीति कृतज्ञः। यद्वा पत्रपुष्पादिकमपि प्रयच्छतो मोक्षं ददातीति कृतज्ञः। प्रतापः प्रकृष्टस्तापः प्रभावश्च यत्तेजः कोषदण्डजम्, सोऽस्यास्तीति प्रतापवान्॥ २७॥

तमिस्रमन्धतमसं हन्तीति तमिस्रहा। 'अनन्तमन्यद्रुशदोऽस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति' इति मन्त्रवर्णात्। यद्वा जनानामज्ञानरूपं पापरूपं वा तमो हन्तीत्यर्थः। 'आदित्यवर्णस्तमसः परस्तात्।' 'अद्य देवा उदिता सूर्य्यस्य निरहंसः पिपृता निरवद्यात्' इत्यादिश्रुतिभ्यः। 'ऐश्वर्य्यस्य समग्रस्य धर्मस्य यशसः श्रियः। वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा।' इति भगः। 'भग एव भगवाँ अस्तु देवास्तेन वयं भगवतः स्याम।' इति श्रुतेः (७।४१)। "अहं स इति तादात्म्येन भावितः संसारबन्धं हन्तीति हंसः। पृषोदरादित्वात् साधुः। हन्ति गच्छति

सर्वशरीरेष्विति वा। 'हंसः शुचिषत्' इति मन्त्रवर्णात्।" (वि० भा०)। प्रपञ्चसारे तु 'स हंकारः पुमान् प्रोक्तः स इति प्रकृतिः स्मृता। पुं प्रकृत्यात्मको हंसस्तदात्मकमिदं जग'दिति। पदार्थादर्शेतु—'उच्छासे चैव श्वासे च हंस इत्यक्षरद्वयं। तस्मात् प्राणस्तु हंसात्मा आत्माकारेण संस्थित' इति। नास्ति असत्यं यस्येति नासत्यः। तमोऽज्ञानमन्धतमसं वा नुदतीति तमोनुदः। शुद्धः पावनः। वि विशेषण विविधं वा रोचते चकास्तीति विरोचनः। 'तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य। विश्वमाभासि रोचन' मिति श्रुतेः। 'ये नाकस्याधिरोचने दिवि देवास आसते' इति च मन्त्रवर्णात्। 'सूर्य्यस्योपरि दिविद्युलोके रोचने दीप्यमाने' इति सायनभाष्याच्च। अभिरूपाः केशा यस्येति केशी केशवः। केशा अत्र तेजांस्येवाहुः। 'सप्त त्वा हरितो रथे वहन्ति देव सूर्य्य। शोचिष्केशं विचक्षण' इति मन्त्रवर्णात्। सहस्रमंशवः करा यस्येति सहस्रांशुः। सर्वासु क्रियासु सामर्थ्यातिशयात् प्रभवतीति प्रभुः। विप्रसंभ्योड्वसंज्ञायामिति डुः। महांश्चासौ प्रभुश्चेति महाप्रभुः॥ २८॥

वि विशेषेण वस्ते आच्छादयति जगदिति क्विपि विवस् तेजस्तदस्यास्तीति विवस्वान्। 'आप्रा द्यावा पृथिवी अन्तरिक्ष' मिति श्रुतेः। पुष्णाति जनानिति पुषा। तेन पुषा मृत्युश्चेति पाठः। पूषण इति कृते तु ल्युप्रत्ययः। 'येन जातानि जीवन्तीति श्रुतेः। मृत्युरन्तको जगत्प्रपञ्चस्य। 'यत् प्रयन्ति अभिसंविशन्ती'ति श्रुतेः। मेहति सिञ्चति जलमिति मिहिरः।

'आदित्याज्जायते वृष्टि रिति' स्मृतेः। जामदग्न्यं परशुरामं जयतीति रामो दाशरथिः। सूर्य्यस्य तु विष्ण्वात्मकत्वादयमुपचारः। घर्म्म आतपो रश्मिर्यस्येति घर्म्मरश्मिः। पतन्नुत्प्लवमान आकाशमार्गेण गच्छतीति पतङ्गः। शरणं रक्षणं। 'शरणं गृहरक्षित्रोः शरणं रक्षणे वधे' इति शाश्वतः। तस्मै साधुरिति शरण्यः शरणागतवत्सलः। तथा च महाभारते वनपर्वे—'पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशं ततोऽनुकम्पया तेषां सविता स्वपिता यथा।' 'एवं भानुभयं ह्यन्नं' भूतानां प्राणधारणं पितैष सर्वभूतानां तस्मात्तं शरणं व्रज।' इति। अमित्रं शत्रुं हन्तीत्यमित्रहा। तपः तपोलोकः। 'अस्योपरि तपोलोकस्तेजोमय उदाहृतः। वैराजा यत्र ते देवा वसेयुर्देवपूजिताः।' इति पद्मपुराणे। सूर्यस्य देवानामावासत्वं दर्शितं प्रागेव। यद्वा तपः ज्ञानमिति। 'यस्य ज्ञानमयं तपः' इति मन्त्रवर्णात् ॥ २६ ॥

दुर्विज्ञेया पुरुषमात्रदुर्बोध्या गतिस्त्रिधा क्रमणं यस्येति दुर्विज्ञेयगतिः। 'विचक्रमाणस्त्रेधोरुगाय' इति श्रुतेः। शूरो वीरः सूर इति पाठान्तरम्। तेजसां राशिः पुञ्जम्। 'तेजस्तेजस्विनामह' मिति स्मरणात्। महद् यशो यस्येति महायशाः। शं मङ्गलं प्रणतानां भावयतीति शम्भुः। चित्रं नवं नवमङ्गं ददातीति चित्राङ्गदः। तथाहि मयूरभट्टः कुष्ठविकलः सूर्य्यमाराध्य नवं वपुर्लेभे। सौम्यः प्रियदर्शनः। यद्वा सोमस्य चन्द्रस्य तेजः प्रदानेन प्रभुरिति सौम्यः। यद्वा "सहोमया वर्त्तत इति सोमो महेश्वरस्तत्सम्बन्धीति।" (वि० भा०)। हव्यं देवार्थं हविः

पुरोडाशादिकम् । कवयः कान्तदर्शिनः पितरस्तेषामिदं कव्यम् । 'हव्यकव्ये दैवपित्र्ये अन्ने' इत्यमरः । ते प्रददातीति हव्यकव्यप्रदायकः । सूर्य्यस्यान्नदातृत्वं प्राक् स्पष्टीकृतम् ॥ ३० ॥

अंशुः किरणोऽस्यास्तीति अंशुमान् । 'किरणोऽस्रमयूखांशुगभस्तिघृणिधृष्णयः' इत्यमरः । ऋक् यजुः साम च वेदानां नामानि । सूर्य्यस्य वेदात्मकत्वं वक्ष्यत्यग्रे । 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्या' दिति श्रुतेः । 'आदित्यानीमानि शुक्लानि यजुंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ।' इति बृहदारण्यके । 'एवं स्तुतः स भगवान् वाजिरूपधरो रविः । यजूंष्ययातयामानि मुनयेऽदात् प्रसादतः ।' इति भारते । हरितो हरिद्वर्णा रसहरणशीला वा अश्नुवन्ति आकाशमित्यश्वा वाजिनो रश्मयो वा यस्येति हरिदश्वः । 'भद्रा अश्वा हरितः सूर्य्यस्य' इति मन्त्रवर्णात् । तमो ध्वान्तं दारयतीति तमोदारः । सप्त सप्तयो वाजिनो यस्येति सप्तसप्तिः । मरीचिः किरणोऽस्यास्तीति मरीचिमान् । 'भानुः करो मरीचि' रित्यमरः ॥ ३१ ॥

अग्निर्गर्भे यस्येति अग्निगर्भः । तिमिरं ध्वान्तं नाशयतीति तिमिरनाशनः । विश्वमन्नप्रदानादिभिर्बिभर्त्तीति विश्वम्भरः । मिद्यति स्निह्यन्तीति मित्रः । 'अग्निर्मित्रो वरुणः शर्म संयन्' इति श्रुते । 'प्रकर्षेण सर्वैं मींयते तथा सर्वान् वृष्टिप्रदानेन त्रायत इति वा मित्रः' इति सायनभाष्ये । 'मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुतद्या' मिति श्रुतेः । 'महाँआदित्यो नभसोपसद्य' इति मन्त्रवर्णाच्च । अयमेव पारशीसम्प्रदायस्य

'मिथ्र' मिहिरो वा। सुवर्ण इत्युक्तं प्राक्। तेन सुपर्ण इति पाठान्तरं खग इत्युक्तत्वात्। 'दिव्यं सुवर्णं वायसं बृहन्तं सरस्वन्तमवसे जोहवीमि' इति मन्त्रवर्णात् ॥ ३२ ॥

आतपः प्रकाशोऽस्यास्तीति आतपी। मण्डलं परिवेषोऽस्यास्तीति मण्डली। भा द्युतिरस्यास्तीति भास्वान्। सर्वान् तापयति किरणेनेति सर्वतापनः। कृतं विश्वं येनेति कृतविश्वो जगतः स्रष्टा। महत्तेजो यस्येति महातेजाः। सर्वरत्नमयश्चासावुद्भवो जगत इति सर्वरत्नमयोद्भवः ॥ ३३ ॥

न क्षरतीत्यक्षरो नित्यः परमात्मा। यद्वा अश्नुते व्याप्नोति कारणात्मनेत्यक्षरः सरप्रत्ययान्तस्य रूपम्। क्षरस्तु परिदृश्यमानां जगदवस्थां प्राप्तः पुरुषः। 'उतामृतत्वस्येशानो यदन्नेनातिरोहती'ति मन्त्रवर्णात्। 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति गीतायाम्। प्रभां विभां दीप्तिं करोतीति प्रभाकरविभाकरौ। पुरुषात्मकत्वादयं चन्द्रः। 'चन्द्रमा मनसो जात' इति श्रुतेः। चन्द्रस्याङ्गं ददातीति चन्द्राङ्गदः। सूर्य्यतेजसैव चन्द्रमा भातीति वैज्ञानिकतत्वमत्रोद्घाटितम्। 'तरणिर्विश्वदर्शतो ज्योतिष्कृतदसि सूर्य्य। विश्वमाभासि रोचनम् इति श्रुतेः।' 'यद्वा चन्द्रादीनां रात्रौ प्रकाशयिता। रात्रौ हि अम्मयेषु चन्द्रादिबिम्बेषु सूर्य्यकिरणाः प्रतिफलिताः सन्तोऽन्धकारं निवारयन्ति यथा द्वारस्थदर्पणोपरि निपतिताः सूर्य्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्व'दिति सायणभाष्ये ॥ ३४ ॥

'अङ्गारकः कुमारश्च बुधं नारायणं तथे'ति पुराणस्मरणात् नारायणादभिन्नत्वादयमुपचारः। यद्वा बुधस्य नाम। महान् अङ्गारोऽलातमुल्मुकमिति महाङ्गारः। सूर्य्यस्याग्निदह्यमानकाष्ठवद्दृश्यमानत्वात्। अङ्गं ददातीत्यङ्गदः। अगस्त्यापत्यं पुमानित्यगस्तिः। रक्तं लोहितवर्णमङ्गमस्येति रक्ताङ्गः। अङ्गं वर्द्धयतीत्यङ्गवर्द्धनः। बुद्धः पण्डितः। 'कवौ बुद्धः पण्डिते बुधिते जिने' इत्यनेकार्थसंग्रहे। यद्वा सदैव जाग्रतः। 'भानुः सकृद्युक्ततुरङ्ग एवे'ति भावः। बुद्धं ज्ञानघनमासनं मण्डलरूपं यस्यति बुद्धासनः। बुद्धिर्ज्ञानम्। बुद्ध ज्ञानप्रबुद्ध आत्मा यस्येति बुद्धात्मा। बुद्धिं वर्द्धयतीति बुद्धिवर्द्धनः॥ ३५॥

बृहतो विस्तीर्णा भानवः किरणा यस्येति बृहद्भानुः। एवं बृहद्भासा उपलक्षितः। बृहत धाम त्विट् यस्येति बृहद्धामा। बृहत्या वाचः पतिरिति बृहस्पतिः। 'बृहस्पतिरूषसं सूर्य्य' इति श्रुतेः। रक्ताङ्गमिति प्रातः सूर्य्यमुक्त्वा मध्याह्नमार्त्तण्डमाह। शुक्रः शुभ्रः। शुक्रं रेतो यस्येति शुक्ररेताः शुक्रमङ्गमस्यति शुक्रांगः। शुक्रं भूषणमस्येति शुक्रभूषणः॥ ३६॥

शनैर्गच्छतीति व्युतपत्तिमुक्त्वाह। शनिर्ग्रहाणामेकतमः। सोऽस्यास्ति तदात्मकत्वादिति शनिमान्। एवं शनिरूपः। आदिः कारणमस्य न विद्यत इति अनादिः। 'सर्वस्य जगतस्त्वादि'रिति वराहपुराणात्। तेन आदिः। तेजसां राशिराधारः। "महत् सत्यविषयं सृष्टि विषयं वा तपो ज्ञानं यस्ये'ति। 'यस्य ज्ञानमयं तप' इति मन्त्रवर्णात्' महातपाः। ऐश्वर्य्यं

प्रतापो वा तपो महद् यस्येति वा ।" ( वि० भा० ) ॥ ३७ ॥

आदेः प्रथमकारणस्य रूप इत्यादिरूपः। दिशां पतिरिति दिक्पतिः। यमो मृत्युरित्युक्तं पूर्वम्। भानुः किरणोऽस्यास्तीति भानुमान्। भानुमयं रूपं प्रकाशोऽस्येति भानुरूपः। स्वः स्वर्गे भानु दीप्तिर्यस्येति स्वर्भानुः। भानुभिर्दीप्तिमानिति भानुदीप्तिमान् ॥ ३८ ॥

धूमः केतुर्यस्येति वह्निर्यद्वा धूमवर्णः केतुरिति धूमकेतुः। महान् केतुः द्युतिर्यस्येति महाकेतुः। 'केतुर्द्युतिपताकयो' रिति अनेकार्थसंग्रहे। सर्व्वेषां मध्ये केतुः पताकावद्व्यवर्त्तक इति सर्वकेतुः। 'पताकायां मतः केतुः केतुरुत्पातचिह्नयो'रिति शाश्वतः। "अविद्यमान उत्तमो यस्मात् सोऽनुत्तमः। 'यस्मात् परं नापरमस्ति किञ्चिदि'ति श्रुतेः। 'न तत् समोऽस्त्यभ्यधिकः कुतोऽन्य' इति स्मृतेश्च। "( वि० भा० )। तिमिरमपहरत्यपावृणोतीति वा तिमिरापहरस्तिमिरावरणश्च। सृजतीति स्रष्टा। अत्रेदं तत्वम्। 'आदित्यः सविते'त्यादिकं सूर्य्यस्य नाम। 'चन्द्रश्चन्द्राङ्गद' इत्यदिकं चन्द्रस्य। 'वुधो वुद्धासन' इत्यादिकं तु वुधस्य। 'बृहद्भानु'रित्यादिकं वृहस्पतेः। शुक्र इति रलयोरभेदात्तमारस्य शुक्रस्य नाम। शनिमानि'त्यादिकं शनैश्चरस्य। स्वर्भानुरित्यादिकं राहोः। धूमकेतुरित्यादिकं च केतोर्नामेति। तेन आदित्यस्य ग्रहपतेर्नवग्रहमयत्वमुक्तम् ॥ ३९ ॥

अथ नमस्कारमारमते ॥ ४० ॥

पद्मानां प्रवोधः प्रकाशो यस्मातस्यै पद्म प्रवोधाय। द्वादश

आत्मानो यस्येति आदित्यस्य द्वादशभेदा उपोद्घाते द्रष्टव्याः। तस्मै द्वादशात्मने ॥ ४१ ॥

विश्वस्य प्रबोधो जागरणं यस्मादिति तस्मै विश्वप्रबोधाय। भ्राजिष्णु र्दीपनशीलश्चासौ जिष्णुर्जयशीलश्चेति तस्मै भ्राजिष्णु-जिष्णवे। ज्योतिः किरणः। 'ज्योतिष्कृदसि सूर्य्य' इति श्रुतेः। तस्मै इति ज्योतिषे। ज्ञानार्काय ज्ञानमयाय सूर्य्याय ॥ ४२ ॥

प्रदीप्त उज्ज्वलः। प्रगल्भः प्रतिभान्वितः। संहारकत्वाद् युगान्ताय। होतॄणां हवनकर्त्तॄणां पतिः पालकस्तस्मै होतृपतये। एवं पालनात् पृथिव्याः पृथिवीपतये ॥ ४३ ॥

'ॐ इति ब्रह्म। ॐ इतीदं सर्वमिति तैत्तिरीयके। रसोऽह-मस्मि कौन्तेय! प्रभास्मि शशिसूर्य्ययोः। प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु।' इति वचनादोंकार आदित्यः। "यदु-द्देशेन यज्ञे वषट् क्रियते स वषट्कारः। यस्मिन् यज्ञे वषट्क्रिया वा" इति शङ्करभगवत्पादाः। यज्ञो ह वै विष्णुः।' 'अहं यज्ञोऽहं वषटकार' इति श्रुतेः। येन वषट्कारादि मन्त्रात्मना देवान् प्रीणयति स वषट्कारः। 'प्रजापतिश्च वषट्कारः। सर्वयज्ञ स्वरूपत्वात् सर्वयज्ञ ॥ ४४ ॥

हाटकवर्णाव स्वर्णवर्णाय। सर्वभूतजयित्वात् जयायः। जय-श्चासौ भद्रं मङ्गलञ्चेति तस्मै जयभद्राय ॥ ४५ ॥

दिवि स्वर्गे भवाय दिव्याय। दिव्यं स्वर्गभवं रुपमस्य तस्मै दिव्यरूपाय। ग्रहाणां मङ्गलादीनां पतये राज्ञे। शुचयेः पावनाय 'आदित्यासः शुचयो धारपूता' इति मन्त्रवर्णात्। कुरोः संवरणा-

त्मजस्य कुलं, तस्य आत्मा कारणं तस्मै कुरुकुलात्मने। यतः सूर्य्यकन्या तपती कुरोर्माता। तथाहि महाभारते—'एवमासीन्महाभागा तपती नाम पौर्विकी। तव वैवस्वती पार्थ! तापत्यञ्च यया मतः। तस्यां संजनयामास कुरुं संवरणो नृपः।' ॥ ४६ ॥

त्रैलोक्यस्य जगतो नाथाय। भूतानां जीवानां पतये दिव्यं चक्षुर्यस्य तस्मै। कैवल्यं मोक्षस्तस्य नाथाय ॥ ४७ ॥

द्युतिः किरणः। प्रजापतिर्ब्रह्मा, विष्णुः, रुद्रात्मा घोरः सृष्टिस्थितिविनाशकत्वात्। वायुर्मरुत्। अग्निर्वह्निः ॥ ४८ ॥

गमनमानमाह ॥ ४८ ॥

नवाधिकद्वादशशतानि योजनानां लक्षाणीति सङ्कलनम्। घटी कालमानज्ञापकः कुम्भः। यद्वा दण्डात्मकः कालः 'स्याद्वा घटी षष्टिरहः खराभै' रिति ज्योतिःशास्त्रे ॥ ५०—५१ ॥

सुरारीणामसुराणां हन्त्रे वधकारिणे। सोमसूर्य्याग्नीनां चक्षुषे चक्षुरिन्द्रियस्थानीयाय। व्योमाय व्योम गगनं तस्मिन्नयते इति तत् सम्बोधनम्। तन्त्रशास्त्रेष्ववस्थानात् पथिषु विततरश्मित्वाद्वा सर्वतन्त्रमयाय ॥ ५२ ॥

वेदान्तवेद्याय ब्रह्मात्मकत्वात्। सर्वेषां कर्म्मादीनां साक्षिणे। हरितः पीतो वर्णो यस्य तस्मै ॥ ५३ ॥

आदित्यस्य मासि मासि विभिन्नानि नामान्याह। बालार्कस्य रक्तवर्णात्वादरुणः। वेदा ऋगादयोऽस्याङ्गानीति वेदाङ्गः ॥ ५४ ॥

इदि परमैश्वर्य्ये रक् इन्द्रः परमेश्वरः। गभस्तिः किरणः ॥५५

इषे आश्विने। सदा भव इति सनातनः। 'सायं चिरं मित्यादिना ट्यु ट्युलौ तुट् च ॥ ५६ ॥

पुरुषः कारणात्मकः। सहस्रकरादिभिरूपलक्षितः। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।' इति श्रुतेः ॥ ५७ ॥

तपन्ते किरणैः सन्तापयन्ति ॥ ५८–५९ ॥

अथ ॐकारात्मकत्वमादित्यस्याह ॥ ६० ॥

कालनियामकत्वात् संहारकत्वाद्वा कालः ॥ ६१ ॥

धनानां शस्यसम्पदामध्यक्षः स्वामीति धनाध्यक्षः। भूतानां जीवजातानां कर्त्ता ॥ ६२ ॥

लोकं जगदनु पश्चाद् ये पातालादयो लोकास्तेषामपि सूर्य्य आत्मा इत्यर्थः ॥ ६३ ॥

धाता विधाता च जगत इति शेषः। वीजं हेतुः कारणम्। क्षेत्रं शरीरम्। 'क्षेत्रं पत्नीशरीरयो'रित्यमरः ॥ ६४ ॥

यज्ञोऽत्र पुरुषमेधमाचष्टे; सूर्य्यस्य पुरुषात्मकत्वात्। 'यत् पुरुषेण हविषा देवा यज्ञमतन्वत' 'यज्ञेन यज्ञमजन्त देवा' इत्यादिकश्रुतिभ्यः। स्वाहा देवार्थं हविः पुरोडाशादिकं स्वधा पितृणामन्नपिण्डादिकञ्च द्योतयतः। 'भुङ्क्ते त्वं यथा वै स्वधाख्या। तद्वत् स्वाहा हव्यभोक्ता स्वयं देवि' इति देवीसूक्ते। एतेन सूर्य्यः पालकः पितृणां देवानाञ्चेत्युक्तम्। ह्रीः श्रीरिति वीजात्मके नाम्नी तु वक्ष्यत्यग्रे। पुरुषाणामुत्तमः पुरुषोत्तमः। तत्र न निर्द्धारणे इति निषधो न प्रवर्त्तते। यत्र 'गवां कृष्णा वहुक्षीरतमेतिवत् जातिगुणापेक्षया पृथक्करणं

तत्रैवासमर्थत्वान्निषेध इति। यद्वा सप्तमीसमासः॥ ६५॥

भूतान्यात्मा यस्येति भूतात्मकः स्थूलावस्थः पुरुषः। यद्वा सर्वेषां भूतानामात्माऽन्तर्यामी। 'एष त आत्मा अन्तर्य्याम्यमृतः' इति श्रुतेः। सूक्ष्मः कूटस्थोऽक्षरः। यद्यप्यनेकमूर्त्तिस्तथापि अयमीदृश इति न व्यज्यत इत्यव्यक्तः ईश्वरः स्वामी। परमे उत्कृष्टे स्वमहिम्नि आकाशे स्थातुं शीलमस्येति परमेष्ठी। 'परमेष्ठी विभ्राजते' इति मन्त्रवर्णात्। यद्वा 'ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामह' इत्यमरः॥ ६६॥

कालस्यात्मा कारणमिति कालात्मा। सूर्य्य एव कालं परिमाति अहोरात्रं विदधान इति। सर्वेषां भूतानामात्मा जीवितमिति सर्वभूतात्मा। 'योऽसावात्मा ज्ञानशक्तिरेक एव सनातन। सः सूर्य्य' इति वराहपुराणात्। वेदात्मा वेदात्मकः। सर्वतः किरणप्रेरणाद् विश्वतोमुखः। जन्मादिकान् नाशयतीत्यर्थः॥ ६७॥

दारिद्र्यरूपं व्यसनमापदं ध्वंसयतीति दारिद्र्यव्यसनध्वंसी। अथ विकर्त्तनप्रभृतीनि एकविंशतिमितानि नामान्याह। वि विशेषेण कृन्तति ध्वान्तं रोगं पापं वेति विकर्त्तनः॥ ६८॥

लोकान् त्रिलोकीं प्रकाशयति तेजसेति लोकप्रकाशकः। एवं चक्षुर्वत् प्रकाशनात् लोकचक्षुः। महानीश्वरः स्वामी संहारकर्त्ता वेति महेश्वरः। अतएव कर्त्ता हर्त्ता च जगतः। यद्वा ग्रहाणामीश्वरः। लोकानां साक्षी पुण्यपापादिकर्मद्रष्टा; 'सूर्य्यः सोम' इत्यादि साक्ष्यमन्त्रात्॥ ६९॥

तापप्रदानात् तापनः। सप्त अश्वा वाहनानि रथ्या यस्येति सप्ताश्ववाहनः। गभस्तयः किरणा एव हस्ता यस्येति गभस्तिहस्तः। 'तपो वेदाश्च विप्राश्च ज्ञानञ्च ब्रह्मसंहितम्।' तस्मै हितत्वाद् ब्रह्मण्यः।' ( वि० भा० )। सर्वदेवैः पूजितत्वात् सर्वदेवनमस्कृतः ॥ ७० ॥

अथ नामग्रहणफलमाह ॥ ७१—७४ ॥

दद्रुप्रभृतिकानां चर्मरोगनामत्वाद् विचर्चिकेति पाठः ॥७५॥

डाकिनीप्रभृतयस्त. त्रोक्ताद्दुर्गासहचर्य्यः ॥ ७६—७७ ॥

अशीर्षां मस्तकविहीनां स्वशरीरस्य छायां पश्यति। इदं मृत्युज्ञापकमरिष्टम्। तथाहि विष्णुपुराणे—'घृते तैले तथादर्शे तोये वा चात्मनस्त... । यः पश्येदशिरस्कां वा मासादूर्ध्वं न जीवति' ॥ ७८—८८ ॥

अथ शत्रुदमनमन्त्रमाह ॥ ८६ ॥

हिमवत् शैत्यवद् आ सम्यक् प्रकारेण लीढं स्पृष्टं भवत्वनेन मन्त्रेन ममामित्र इति शेषः। मार्त्तण्डचण्डांशुभिरालीढं शैत्यं यथा निःशेषं नश्यति तद्वदयमपि नश्यतु। तदेव पुनराह—'नि भृशं निःशेषमिति वा लीढं भवतु। मः भ्रमस्तेनालीढं भवतु। भ्रमदूषितस्य पदे पदे विपद इति स्मरणात्। दुर्वारोऽयं दमन प्रयोग इति भूयानर्थवादः ॥ ६०—६४ ॥

अथ तत्प्रतीकारकथनम् ॥ ६५—६७ ॥

अथ पूजनयन्त्रलेखप्रकारः ॥ ६८—१०२ ॥

अथ पूजाप्रकारमाह ॥ १०३—१०६ ॥




अथ मन्त्रोद्धारः। श्रीमिति श्रीविद्याविशेषे सूर्य्यमन्त्रः। तथाहि तन्त्रसारे—'ह्रीं हंसः इदमर्घ्यं सूर्य्याय नमः। श्रीविद्याविषये तु, 'ऐं ह्रीं श्रीं ह्रां ह्रीं सः।' क्लीमिति कामराजमन्त्रं विभज्याह किलीति। कट आवृणु मां रक्षेत्यर्थः। इष्टोऽभिलषितः सर्वोऽर्थः प्रयोजनं तं साधयतीति तस्मै। ह्रां ह्रीमित्यादिकानां सूर्य्यमन्त्रत्वस्य मानं तन्त्रसारे—'आकाशमग्निदीर्घेन्दुसंयुतं परमेश्वरी। सर्गान्वितो भृगोर्भानोस्त्र्यक्षरोऽयं समीरितः।' आकाशं हकारो रकारश्चाग्निः। स इति प्रकृतिः। खमाकाशं तस्योल्का

तस्मै तेजोभिर्जाज्वल्यमानत्वात्। तन्त्रसारेऽपि 'ॐ खखोल्काय' इति सूर्य्यमूर्त्तिपरिकल्पना ॥ १०७ ॥

अथ नमस्कारमारभते। प्रतिगृह्णेति दुर्घटः। 'हलः श्नः शानज्झौ' इति सूत्रितत्वात्। तेन प्रगृहाणेति पाठान्तरम् ॥ १०८ ॥

जातवेदाः वह्निः सर्वज्ञो जातधनो जातप्रज्ञो वा ॥१०६-११३॥

अक्षय्यं ध्वंसरहितं तेजो यस्य तस्मै अक्षय्यतेजसे ॥ ११४—११५ ॥

आदित्यस्य देवत्रितयमयत्वमाह। प्रातर्ब्रह्मरूपा मध्याह्ने विष्णुरूपा सायञ्च शिवरूपा गायत्रीति प्रायो दृश्यते। तेन सूर्य्यस्यापि तथा भेदेन 'अस्तमाने महेश्वरः। मध्याह्ने च स्वयं विष्णु' रिति कल्प्यः पाठ इति चेदुच्यते अनया दिशा गायत्र्या अपरो भेदो दरीदृश्यते। स यथा गायत्रीहृदये—'पूर्वसन्धिर्ब्राह्मी मध्यसन्धिर्माहेश्वरी अपरसन्धिर्वैष्णवी ॥ ११६—११६ ॥

कृतघ्नः कृतस्योपकारादेरस्वीकर्त्ता तं हन्तीति तस्मै कृतघ्नघ्नाय। हिमं तमो रक्षश्च हन्तीति तस्मै। सत्याय; अवितथरूपत्वात् परमात्मा सत्यं तस्मै। सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेः। सदिति प्राणः तिति अन्नं यमिति आदित्य इति वा। 'सदिति प्राणास्तीत्यन्नं यमित्यसावादित्य' इति श्रुतेः। इति श्रीशङ्करभगवत्पादाः ॥ १२०—१२१ ॥

कनकमयानां स्वर्णमयानांमम्बुजानां पद्मानां रेणुभिः परागैः पिञ्जरं पीतरक्तवर्णम् ॥ १२२—१२३ ॥

पशून् साधकविशेषान्। तथाहि रुद्रयामले—'नित्यश्राद्धं

तथा सन्ध्यावन्दनं पितृतर्पणम् । देवतादर्शनं पीठदर्शनं तीर्थदर्शनम् । गुरोराज्ञापालनञ्च देवतानित्यपूजनम् । पशुभावस्थितो मर्त्यो महासिद्धिं लभेद् ध्रुवम् ॥ १२४—१३२ ॥

अजाय जन्मरहिताय । वृषाय धर्माय । भूतानां जीवजातानामात्मा तस्मै । महतां कारुणिकानां दयावतामुत्तमः प्रधानस्तस्मै ॥ १३३ ॥

ज्ञानं बिभर्त्तीति ब्रह्मज्ञानघनोऽन्तरात्मा यस्य तस्मै । स्वयम्भुवे स्वयंजाताय । अमितमपरिमेयमनन्तं तेजो यस्य तस्मै ॥ ॥ १३४ ॥

मोक्षं प्रददातीति तस्मै । यद्वा मोक्षस्यापवर्गस्य पदं स्थानम् । मोक्षं प्राप्य सूर्य्य एव निलीयत इत्यर्थः ॥१३५—१३७॥

तुरीयः परब्रह्म चैतन्यात्मा । 'शिवमद्वैत तुरीयं मन्यत' इति श्रुतेः ॥ १३८ ॥

जगत एक मद्धितीयं चक्षुस्तस्मै । 'सूर्य्यो यथा सर्वभूतस्य चक्षु'रिति तैत्तिरीये । त्रयी वेदानामिति वेदमयाय । सत्वरजस्तमोरूपास्त्रयो गुणा एव आत्मा तं धारयितुं शीलमस्य तस्मै । विरिञ्चिर्ब्रह्मा । नर आत्मा ततो जातान्याकाशादीनि नाराणि, तानि कार्याण्ययं कारणात्मना व्याप्नोतीति तान्यायतनमस्येति नारायणः । 'नराज्जातानि तत्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायण स्मृतः । इति हरिवंशे । शङ्करः शिवः । ते आत्मान यस्य तस्मै ॥ १३९ ॥

जगत प्रबुध्यते । सूर्य्य एव जनान् कर्मणे प्रेरयतीति । 'तत्

सूर्य्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्विततं संजभार' इति श्रुतेः ॥ १४० ॥

सहस्रशाखान्वितो दशशतकरधारी चासौ सम्यक् प्रकारेण संसारस्यात्मेति तस्मै। सहस्रैर्योगैरुपायैरुद्भवन्ति ये भावा पदार्था स्तेषां भागोऽस्यास्ति तस्मै। सहस्रं संख्या येषां तादृशो ये युगा द्वादशसंवत्सरमिता कालविशेषास्तान् परिमातृत्वेन यो धारयति तस्मै, 'ये द्वे कालं विधत्त' इति स्वरसात् ॥ १४१ ॥

अथ मण्डलाष्टकं विवृणोति। 'यन्मण्डल' मित्यादिका अष्टावेव श्लोका, 'मण्डलाष्टमिदं पुण्यमिति वक्ष्यमानत्वात्। तेन 'यन्मण्डलं विष्णुचतुर्मुखाख्यं'मित्यादिकश्लोकपर्यन्तमेव मण्डलाष्टकमिति स्पष्टम्। एतदनन्तरं यत् श्लोकपञ्चकं दृश्यते तत् प्रक्षिप्तमित्यपि सिद्धम्। किन्तु 'यन्मण्डलं विश्वसृज' इत्यादिको 'यन्मण्डलं सर्वगतस्य विष्णोरित्यादिकश्च श्लोकौ परममधुरतया सूर्य्यसम्बन्धीयतत्त्वद्वयप्रकाशकतया च त्यक्तुं न शक्येते। अथवा सत्स्वपि त्रयोदशसु श्लोकेषु तत्वानि खलु अष्टसंख्यकान्येव तेषु समुद्घाटितानीति। तेषु (१४२) श्लोकेन दीप्तिप्रखरं दारिद्र्यविध्वंसकञ्च मण्डलमिति, (१४३) श्लोकेन सुरासुरनरपूजितं मुक्तिप्रदञ्च मण्डलमिति, (१४४) श्लोकेन ज्ञानमयमगम्यं तेजोमयञ्च मण्डलमिति, (१४५) श्लोकेन वुद्धिप्रदं धर्मवर्द्धकं पापनाशकञ्च मण्डलमिति, (१४६) श्लोकेन व्याधिविनाशदक्षं वेदात्मकञ्च मण्डलमिति, (१४७, १५२, १५३, १५४) श्लोकचतुष्टयेन वेदविद्भिः सिद्धगन्धर्वादिभिर्योगरतैः सुरासुर-

नरैश्च सम्प्रगीतं मण्डलमिति, ( १४८, १४६, १५०, १५१ ) श्लोक-चतुष्टयेन विष्ण्वात्मकं पापहरं कूटस्थं सृष्टिस्थितिविनाशदक्षञ्च मण्डलमित्यष्टावेवावान्तरवाक्यानीति। रत्नानां प्रभेव प्रभा यस्य तत्; सूर्य्यकिरणस्य नीलपीतहरितादिवर्णसप्तककर्बुरितत्वात्। भावनात् चिन्तनात्, मानवानां जनानां वा, मुक्ति विषये कोविदं पण्डितं दक्षमिति यावत्। अगम्यं पुरुषमात्रदुष्प्रापम्। भूर्भुवस्वरित्युपलक्षणमेतदुपलक्षितानि चतुर्दशभुवनानि येन रश्मिना प्रकाशितानीति। उत्पत्तिः सृष्टिः, रक्षा पालनं, प्रलयो ध्वंसस्तेषु प्रगल्भं दक्षमित्यर्थः। परं धाम श्रेष्ठं ब्रह्मात्मकं ज्योतिः। विशुद्धं संशयाद्यभावात् तमःसम्पातरहितत्वाद्वा निर्मलं तत्त्वं स्वरूपं यस्य तत्। सूक्ष्ममत्यल्पमन्तरं भेदो येषां तादृशै र्योगपथैरनुगम्यम्॥ १४२—१५५॥

अथ मध्येमार्त्तण्डमण्डलमेव मुकुन्द इति तत्वमुद्घाटयति। केयूरः कटको हस्तभूषणं वलय मिति यावत्। मकरो नक्रस्तेन चिह्नितं कुण्डलं कर्णभूषणमस्यास्तीति। कुशेशयं पद्ममाक्रान्तमारूढम्॥ १५६—१६०॥

करुणभावेन कारुण्येन दययेति यावत्॥ १६१—१६२॥

अथ आदित्यस्य द्वादश नामान्याह। त्रिलोचनः संहारकत्वाद्रुद्रः। दिनं करोतीति दिनकृत्। त्रयी वेदत्रयी यद्वा ब्रह्मविष्णुरुद्ररूपदेवत्रयी मूर्त्तिर्यस्य। द्वादश आत्माऽस्येति द्वादशात्मा; द्वादश-भेददर्शनात्॥ १६३—१६८॥

अथ सूर्य्यस्य वेदात्मकत्वमाविष्करोति। पञ्चमाय उपवेदाय

वेदसङ्काशाय । भास्करोऽयं भगवान् पञ्चमो वेदः । वेदवदतिश्रद्धया वेदितव्य इति भावः ॥ १६६—१७२ ॥

उदयगिरिं पूर्वपर्वतमुपेतमारूढं । पद्मं हस्ते करे यस्य, रविकरसम्पर्कात् कमलविकाशदर्शनात् । निखिलानां सर्वेषां भुवनानां चतुर्दशमितानां जगतां नेत्रं चक्षुर्वत् प्रकाशकम् । रक्तेणारुणेन रत्नेन मणिना पद्मरागेन, यद्वा रत्नानां मध्ये यद्रत्नमुत्कृष्टं तेन ; 'जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यत' इति स्मरणात् ; उपमेयं तुल्यं, बालार्कस्यारुणत्वात् । तिमिररूपः करी हस्ती तस्य मृगेन्द्रं सिंहं, सिंहो यथा गजान्तकस्तद्वत् सूर्य्योऽपि ध्वान्तविध्वंसीति भावः । पद्मिनीनां कमलिनीनां बोधकं विकाशकं, यथा बोधज्ञः ( कामशास्त्रवित् ) कामिनीं रतेन बोधयति सन्तोषयति तद्वदयमपि कमलिनीमिति ध्वनिः । विश्वे जगति वन्द्यं पूज्यं यद्वा विश्वस्य जगतो दीपं दीपवत् प्रकाशकम् । सर्वे देवा यस्मिन् तत्सम्बोधनम् ॥ १७३—१७४ ॥

इति आदित्यदीपनीटीका समाप्ता ।

---

## अथ छन्दोनिरूपणम् ।

अस्मिन् स्तोत्रे प्रायेणानुष्टुप् छन्दः । तल्लक्षणन्तु 'पञ्चमं लघु सर्वत्र, सप्तमं द्विचतुर्थयोः । गुरुः षष्ठञ्च पादानां शेषेष्वनियमं मतम् ।

कतिचित्तु विभिन्नैर्वृत्तै रचिताः श्लोका अस्मिन् विद्यन्ते ।

तेषु (१) भास्वद्रत्नाढ्यमौलिरित्यत्र स्रग्धरा वृत्तं, 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेय'मिति लक्षणात्। (७) 'नमो नमस्त' इत्यत्र त्रिषु चरणेषु वंशस्थं, वंशस्थविलं वा वृत्तं, 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्। अस्य द्वितीये पादे तु 'इन्द्रवंशा वृत्तं, 'सर्वात्मन' इति प्रथमाक्षरगुरुत्वात् 'तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ' इति लक्षणात्। तेनात्र इन्द्रवज्रोपेन्द्रवज्रामिश्रनादिव इन्द्रवंशावंशस्थयोः सङ्करजात'मुपजाति' वृत्तम् 'इत्थं किलान्यास्वपि मिश्रितासु, वदन्ति जातिष्विदमेव नाम' इत्युक्तत्वात्। 'भवात्मने' इति कृते तु नैतद्वक्तव्यम्। (१०८) 'नमोऽस्तु सूर्य्याय' इत्यत्र वंशस्थं वृत्तम्। (१०९) श्लोकादनन्तरस्थितस्य 'दिशि दिशि तपनम्' इत्यादि श्लोकस्य छन्दोनिर्णयो दुर्घटः। तस्यायं गणविभागः—

न न र य न ज ज र

दिशिदि शितप नंमहो ग्रतापं, ज्वलित हुताश नदीप्त तेजसम्।

न स स य न ज न र ग

तिथिक रणका लमुहू र्त्तचक्रं, दिवस करंश रणमु पैमिसू र्य्यम्।

एतस्मात् स्पष्टं प्रतीयते यदत्र कतिपु स्थलेषु लक्षणाद्भ्रष्टं पुष्पिताग्रावृत्तम्'। तल्लक्षणन्तु 'अयुजि नयुगरेफतोयकारो युजि च नजौ जरगाश्च पुष्पिताग्रा। तेनायं दोषपरिहारः—
'दिशि दिशि तपनं महोग्रतापं, ज्वलितहुताशनदीप्ततेजसञ्च।
तिथिकरणसमामुहूर्त्तचक्रं, दिवसकरं शरणाय यामि सूर्य्यम्।'
(११६) श्लोके पूर्वार्धमुपजातिवृत्तमिन्द्रवज्रासङ्करजमुत्तरार्धं तु

गद्येन रचितम्। तेषां लक्षणानि तु 'स्यादिन्द्रवज्रा यदि तौ जगौ गः', 'उपेन्द्रवज्रा तु जतौ जगौ गः' 'अनन्तरोदीरितलक्ष्म-भाजौ पादौ यदीयावुपजातयस्ताः।' ( १२२ ) हरितहयरथमि-त्यत्र वृत्तमपरवक्त्रमिदं नजौ जरौ। ( १३३ ) अजायेत्यादिकमु-पजाति वृतम्। (१३४) विवस्वत इत्यादिकं वंशस्थविलं वृत्तम्। ( १३५ ) सुरैरित्यत्रोपजातिर्वृत्तम्। ( १३६—१४१ ) नमः सवित्र इत्यारभ्य श्लोकत्रयी वंशस्थवृत्तेन रचिता।(१४२—१५४) त्रयो-दशमण्डलश्लोका इन्द्रवज्रोपेन्द्रवज्रमिश्रणादुपजातिवृत्तेन वद्धाः। ( १५६ ) ध्येयः सदेत्यादिकः ( १५८ ) एतत्तु य इत्यादिकश्च श्लोकौ वसन्ततिलकच्छन्दसा रचितौ। तल्लक्षणन्तु 'ज्ञेयं वसन्ततिलकं तभजा जगौ गः। ( १७२ ) उपान्तश्लोके उदय-गिरिमित्यादिके मालनी वृत्तम्। तल्लक्षणं तु 'न नमयय युतेयं मालिनी भोगिलोकैः।'

---

## अथ टीकाकृतो वंशपरिचयः।



गङ्गा-तरङ्ग-कुल-सङ्ग-पवित्रितान्त-
गौराङ्ग-पुण्य-हरिकीर्त्तन-रङ्गभूमिः।
ख्यातोऽस्ति तीर्थ इह शान्तिपुराभिधानं
धन्यं सुरम्यनगरं खलु वङ्गदेशे॥ १॥
हरिपुरमिति नाम ग्राम आस्तेऽभिराम-
स्तमजुनगरवर्य्यं श्यामलीभूतचूतैः।

गदनिहनन विद्यादक्षताजातकीर्त्तिः
समभवदनवद्यो वैद्यवंशोऽत्र कश्चित् ॥ २ ॥
वभूव तस्मिन् सुपवित्रवंशे
वैद्याग्रणीः श्रीवलरामनामा ।
चिकित्सकः काश्यपगोत्रजातो
रोगार्त्तसेवाकुशलो दयालुः ॥ ३ ॥
संप्राप्य तस्य सदयं करपद्मसङ्गं
चिन्ता चिताधिकरुजा प्रशमं प्रयाति ।
एतद्विलोक्य कृतमस्य तु नाम लोकै-
श्चिन्तामणिर्जिततुषारमृणालकीर्त्तिः ॥ ४ ॥
क्षीराम्भोनिधिमन्थनादिव समुत्पन्नस्तु धन्वन्तरिः
क्रूरव्याध्यसुरप्रमोहनपरा मूर्त्तिर्यथा मोहिनी ।
तस्मात् सुश्रुतसुश्रुतादिचरिताद् भैषज्यरत्नाकरा-
ज्जातः श्रीव्रजमोहनो गुणगणैरालिङ्गितः पण्डितः ॥ ५ ॥
हरिर्यथा दैत्यजयं जयन्तं तथैव पुत्रं तु रुजं जयन्तम् ।
अवाप कालीपदपद्मभृङ्गं कीर्त्तिं स मूर्त्तामिव कालिदासम् ॥ ६
स्वयं निःस्वो भूत्वा य इह कलिकाताख्यनगरं
समागम्य व्याधिग्रसनगहनं स्वप्रतिभया ।
परां कीर्त्तिं विश्वे समलभत निःशेषितगदो
न के वा जानन्ति प्रथितयशसं तं वुधवरम् ॥ ७ ॥
योऽयं भारतभूपतिप्रतिनिधिश्रेष्ठेन सम्मानितो
विद्याभूषण-वैद्यरत्न इति यश्चोपाधिभिर्भूषितः ।

आढ्यानां भिषगप्यलोभहृदयो वैद्यावतंसः सुधी·
रासीद् यश्च भवौषधे रचयिता सोऽयं पितुर्मे पिता ॥ ८ ॥
तेनैव तुल्यस्तु नरेन्द्रनाथो जातः पिता दैवतमेव साक्षात् ।
विभावती दिव्यविभावती मे माता गरीयस्यमरालयाच्च ॥ ६
तयोः सुतोऽयं जडधीः सुमूढो देवीप्रसादाद्गुरुवर्य्यमाप्य ।
देवीप्रसादः प्रतनोति टीकां द्विपेषुवस्विन्दुमिते शकाब्दे ॥१०

दोषास्तु सन्ति यदि सन्तु किमत्र कार्य्यं
चेष्टा यथामति कृता न फलेऽधिकारः ।
मद्दूषणं विबुध ! भूषणतां प्रयातु
शम्भुप्रसादपवितस्तु यथा कलङ्की ॥ ११ ॥

---

# टीकायां व्याख्यातानां नाम्नां संग्रहः ।



( ध्यानादनन्तरस्थिताः संख्या अत्र लिखिताः )

---

## आकरसमययोर्निरूपणे परिशिष्टम् ।

वाल्मिकीये रामायणेऽपि युद्धकाण्डे अगस्त्यश्रीरामसम्वादे आदित्यहृदयमिति नाम्ना किमपि स्त्रोत्रं षष्ठोत्तरशततमं सर्गं रचयति । तेन सह भविष्यपुराणोक्तादित्यहृदयस्य अत्यर्थं सादृश्यं दृश्यते । तेनेदमपि सम्प्रत्यायाति यदादित्यहृदयं बीजरूपेण रामायणे दृश्यते । तेन यदिदमादित्यहृदयमधुना मिलति मुदितञ्चास्माभिस्तत्तु महाभारतोत्तरकालीनमेव । रामायणमपि खृष्टीयद्वितीयशताब्द्यां तत् सन्निहिते वा काले वर्त्तमानामाकृतिमभजत, कुमारलातेन तत्पाठादिकस्योल्लिखितत्वादिति विविच्य मनोरमो मध्यपथस्थितानां पुर्वोपस्थापितः सिद्धान्त इति ।

---